१३ सर्वातिरिक्तसारेण सर्वतेजोभिभाविना स्थितः सर्वोन्नतेनोर्वी क्रान्त्वा मेरुरिवात्म
ना १४ आकारसदृशः प्रज्ञः प्रज्ञया सदृशागमः आगमैः सदृशारंभः आरंभस
दृशोदयः १५ भीमकान्तैर्नृपगुणैः स बभूवोपजीविनां अधृष्य
श्चाभिगम्यश्च यादोरत्नैरिवार्णवः १६ रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परं
न व्यतीयुः प्रजास्तस्य नियंतुर्नेमिवृत्तयः १७ प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रही
त् सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः १८ सेनापरिच्छदस्तस्य द्वयमेवार्थसाध
नं शास्त्रेष्वकुंठिता बुद्धिर्मौर्वी धनुषि चातता १९ तस्य संवृतमंत्रस्य गूढाकारेंगित
स्य च फलानुमेयाः प्रारंभाः संस्काराः प्राक्तना इव २० जुगोपात्मानमत्रस्तो भे
जे धर्ममनातुरः अगृध्नुराददे सोर्थमसक्तः सुखमन्वभूत् २१ ज्ञाने मौनं क्ष
मा शक्तौ त्यागे श्लाघाविपर्ययः गुणा गुणानुबंधित्वात्तस्य सप्रसवा इव २२ अ
नाकृष्टस्य विषयैर्विद्यानां पारदृश्वनः तस्य धर्मरतेरासीद्वृद्धत्वं जरसा विना २३
प्रजानां विनयाधानाद्रक्षणाद्भरणादपि स पिता पितरस्तासां केवलं जन्महेत
वः २४ स्थित्यै दंडयतो दंड्यान् परिणेतुः प्रसूतये अप्यर्थकामौ तस्यास्तां धर्म एव
मनीषिणः २५ दुदोह गां स यज्ञाय सस्याय मघवा दिवं संपद्विनिमयेनोभौ दध

रघुवंशकाव्य

२

त्वर्द्धवमंहय्ये २६ न किलानुययुस्तस्य राजानो रक्षितुर्यशः। व्यावृत्ता यत्परस्वेभ्यः।
श्रुतौ तस्करता स्थिता २७ द्वेष्योपि सम्मतः शिष्टः स्तस्यार्तस्य यथौषधं त्याज्यो दु
ष्टः प्रियोप्यासी दंगुष्ठ इवाहिना २८ तं वेधा विदधे नूनं महाभूतसमाधिना त
था हि सर्वे तस्यासन् परार्थैकफला गुणाः २९ स वेलावप्रवलयां परिखीकृत
सागरां अनन्यशासनामुर्वीं शशासैकपुरीमिव ३० तस्य दाक्षिण्यरूढेन
नाम्ना मगधवंशजा पत्नी सुदक्षिणेत्यासी दध्वरस्येव दक्षिणा ३१ कलत्रवंतमा
त्मान मवरोधे महत्यपि तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः ३२ तस्या
मात्मानुरूपायामात्मजन्मसमुत्सुकः विलंबितफलैः कालं स निनाय मनोरथैः ३३
गं गां सगीरथेनेव पूर्वेषां पावनक्षमां इच्छता संततिं तेन न्यस्ता मंत्रिषु कोशला
३४ संतानार्थाय विधये स्वभुजादवतारिता तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे
३५ अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया तौ दंपती वशिष्ठस्य गुरोर्जग्मतुराश्रमं।
३६ स्निग्धगंभीरनिर्घोषमेकं स्यंदनमाश्रितौ प्रावृषेण्यं पयोवाहं विद्युदैरावतावि
व। ३७ मा भूदाश्रमपीडेति परिमेयपुरःसरौ अनुभावविशेषात्तु सेनापरिगता
विव ३८ सेव्यमानौ सुखस्पर्शैः शालनिर्यासगंधिभिः पुष्परेणूत्करैर्वातै राधूतवनं

राजिभिः ३९

२

पवनस्यानुकूलत्वात् प्रार्थनासिद्धिशंसिनः रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ
४० हैयंगवीनमादाय घोषवृद्धानुपस्थितान् नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनां
४१ सरसीष्वरविन्दानां वीचिविक्षोभशीतलं आमोदमुपजिघ्रन्तौ स्वनिश्वासानुकारि
णं ४२ मनोभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः षड्जसंवादिनीः केकाः द्वि
धा भिन्नाः शिखण्डिभिः ४३ परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु मृगद्वन्द्वेषु पश्यं
तौ स्यन्दनाबद्धदृष्टिषु ४४ श्रेणीबन्धाद्वितन्वद्भिरस्तम्भां तोरणस्रजं सारसैः क
लनिर्ह्रादैः क्वचिदुन्नमिताननौ ४५ ग्रामेष्वात्मविसृष्टेषु यूपचिह्नेषु यज्वनां
अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः ४६ कलकम् काप्यभिख्या तयोरा
सीद्व्रजतोः शुद्धवेषयोः हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ४७ तत्त[redacted]पमः ४८ स दुःप्रा
[redacted] ४९ व
पयशाः प्रापदाश्रमं श्रान्तवाहनः सायं संयमिनस्तस्य महर्षेर्महिषीसखः ४९ व
नान्तरादुपावृत्तैः स्कन्धसक्तसमित्कुशैः अग्निप्रस्तुममात्मृतैः पूर्यमाणतपस्वि
त्तिः ५० पार्वतिरं वनान्तरादुपावृत्तैः समित्कुशफलाहरैः पूर्यमाणमदृश्याग्नि
सुद्रूघातैस्तपस्विभिः ५१ आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः अपत्यैरिव

रघुवंशकाव्य। २

वारतागधेयोचितैर्वृतैः ५२ सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकं विश्वासाय विहं
गानां आलवालाम्बुपायिनं ५३ आतपात्ययसंक्षिप्तनीवारासु निषादिभिः मृगै
र्वर्तितरोमन्थमुटजाङ्गनभूमिषु ५४ अभ्युत्थिताग्निपिशुनैरतिथीनाश्रमोन्मुखान्
पुनानं पवनोद्धूतैः धूमैराहुतिगंधिभिः ५५ अथ यन्तारमादिश्य धुर्यान्
विश्रामयेति सः तामवारोहयत्पत्नीं रथादवततार च ५६ तस्मै सभ्याः सभार्याय
गोप्त्रे गुप्ततमेंद्रियाः अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे ५७ विधेः सायंतन
स्यान्ते सददर्श तपोनिधिं अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजं ५८ तयोर्ज
गृहतुः पादान् राजा राज्ञी च मागधी तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिनंदतुः ५९ त
मातिथ्यक्रियाशान्तरथक्षोभपरिश्रमं पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनि
६०॥ अथाथर्वनिधेस्तस्य विजितारिपुरः पुरः अर्थ्यामर्थपतिर्वाचमाददे वद
तां वरः ६१ उपपन्नं ननु शिवं सप्तस्वंगेषु यस्य मे दैवीनां मानुषीणां च प्रतिहर्ता त्वमा
पदां ६२ तव मंत्रकृतो मंत्रैः दूरात्संशमितारिभिः प्रत्यादिश्यंत इव मे दृष्टलक्ष्यभि
दः शराः ६३ हविरावर्जितं होतस्त्वया विधिवदग्निषु वृष्टिर्भवति सस्यानामवग्र
हविशोषिणां ६४ पुरुषायुषजीविन्यो निरातंका निरीतयः यन्मदीयाः प्रजास्त ॥ २

स्य देवस्तु इस सर्वसा ६४ त्वयैवं चिंत्यमानस्य गुरुणा ब्रह्मयोनिना सानुबंधाः क
थं न स्युः संपदो मे निरापदः ६६ किंतु वध्वां तवैतस्यामदृष्टसदृशप्रजं न मामवति
सद्वीपा रत्नसूरपि मेदिनी ६७ मत्परं दुर्लभं मत्वा नूनमावर्जितं मया पयः पूर्वैः स
निश्वासैः कवोष्णमुपभुज्यते ६८ नूनं मत्तः परं वंश्याः पिंडविच्छेददर्शिनः न प्र
कामभुजः श्राद्धे स्वधासंग्रहतत्पराः ६९ यावांतरं सोऽहमिज्याविशुद्धात्मा प्रजा
लोपनिमीलितः प्रकाशश्चाप्रकाशश्च लोकालोक इवाचलः ७० लोकांतरसुखं पुण्यं त
पोदानसमुद्भवं संततिः शुद्धवंश्या हि परत्रेह च शर्मणे ७१ तया हीनं विधातर्मां
कथं पश्यन्न दूयसे सिक्तं स्वयमिव स्नेहाद्वंध्यमाश्रमवृक्षकं ७२ असह्यपीडं
भगवन्नृणमंत्यमवेहि मे अरुंतुदमिवालानमनिर्वाणस्य दंतिनः ७३ तस्मान्मुच्ये
यथा तात संविधातुं तथार्हसि इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ७४ इति
विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः ७५
सोऽपश्यत्प्रणिधानेन संततेः स्तंभकारणं भावितात्मा भुवो भर्तुरथैनं प्रत्यबोधयत् ७६
पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यतः आसीत्कल्पतरुच्छायामाश्रिता सुरभिः
पथि ७७ इमां देवीमृतुस्नातां स्मृत्वा सपदि सत्वरः प्रदक्षिणक्रियातीतस्तस्याः को

॥मस्तु॥ पमडीजनः ७८ धर्मलोपभयाद्राज्ञी मिमां संचिंत्य सत्वरः प्रदक्षिणक्रियार्हायां तस्यां त्वं
६ साधु नाचरः ७९ यावांतरं अवजानासि मां यस्मात्तस्ते न भविष्यति मत्प्रसूतिमनारा
ध्य प्रजेति त्वां शशाप सा ८० स शापो न त्वया राजन् न च सारथिना श्रुतः नदत्याका
शगंगायाः स्रोतसुद्दामदिग्गजे ८१ ईप्सितं तदवज्ञानात् विद्धि सार्गलमात्मनः प्रति
बध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमात् ८२ अवैमितदप्यापाना छन्नापेक्ष मनोरथं ह
विषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः भुजंगपिहितद्वारं पातालमधितिष्ठति ८३ सत्व
मेकांतरं तस्या मदीयं वत्समातरं आराधय सपत्नीकः प्रीता कामदुघा हि सा ८४ इति
वादिन एवास्य होतुराहुतिसाधनं अनिंद्या नंदिनी नाम धेनुराववृते वनात् ८५ ताम्रां
ललाटरेखां बिभ्रती सा सितेतरां संध्याप्रातिपदेनेव प्रतिभिन्ना हिमांशुना ८६ शुभ्रं
णांतरं ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला बिभ्रती श्वेतरोमांकं संध्येव शशिनं न
वं ८७ भुवं कोष्णेन कुंडोध्नी मध्येनावभृथादपि प्रस्रवेणाभिवर्षंती वत्सालो
कप्रवर्तिनी ८८ रजः कणैः खुरोद्धूतैः स्पृशद्भिर्गात्रमंतिकात् तीर्थाभिषेकजां शुद्धि
मादधाना महीपतिः ८९ पंचभिः कुलकं तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोधन ६
याज्यमाशंसितावंध्य प्रार्थनं पुनरब्रवीत् ९० अदूरवर्तिनीं सिद्धिं राजन् विगणय॥

यात्मनः उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यत् ९१ वन्यवृत्तिरिमां शश्वदात्मानु-
गमनेन गां विद्यामभ्यसनेनेव प्रसादयितुमर्हसि ९२ प्रस्थितायां प्रतिष्ठेथाः स्थितायां
स्थानमाचरेः निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः ९३ वधूर्भक्तिमती चैनाम-
र्चितामा तपोवनात् प्रयता प्रातरन्वेतु सायं प्रत्युद्व्रजेदपि ९४ इत्याप्रसादादस्यास्त्वं
परिचर्यापरो भव अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणां ९५ तथेति प्रतिजग्राह
प्रीतिमान्सपरिग्रहः आदेशं देशकालज्ञः शिष्यः शासितुरानतः ९६ अथ प्रदोषे दो-
षज्ञः संवेशाय विशांपतिं सूनुः सूनृतवाक्स्रष्टुर्विससर्जोर्जितश्रियं ९७ सत्या-
मपि तपःसिद्धौ नियमापेक्षया मुनिः कल्पवित्कल्पयामास वन्यामेवास्य संविधां ९८
निर्दिष्टां कुलपतिना स पर्णशालामध्यास्य प्रयतपरिग्रहद्वितीयः तच्छिष्याध्ययन-
निवेदितावसानां संविष्टः कुशशयने निशां निनाय ९९ इति रघुवंशे महाकाव्ये वि-
सिष्ठाश्रमगमनो नाम प्रथमः सर्गः १ अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहि-
तगंधमाल्यां वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच १ तस्याः खुरन्यासपवि-
त्रपांसुमपांसुलानां धुरि कीर्तनीया मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वग-
च्छत् २ निवर्त्य राजा दयितां दयालुस्तां सौरभेयीं सुरभिर्यशोभिः पयोधरीभूतचतुःस-

रघु...काव्य दुग्धाजगोप्ता गोरूपधरामिवोर्वीं ३ व्रतायतेनानुचरेणधेनोर्न्यषेधिशेषोप्यनुयायिवर्गः
५ न चान्यतस्तस्य शरीररक्षा स्ववीर्यगुप्ता हि मनोः प्रसूतिः ४ आस्वादवद्भिः कवलैस्तृणा
नां कंडूयनैर्दंशनिवारणैश्च अव्याहतैः स्वैरगतैः स तस्याः सम्राट् समाराधनतत्परो
ऽभूत् ५ स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबंधधीरः जलाभिलाषी ज
लमाददानां छायेव तां भूपतिरन्वगच्छत् ६ स न्यस्तचिह्नामपि राजलक्ष्मीं तेजोवि
शेषानुमितां दधानः आसीदनाविष्कृतदानराजिरंतर्मदावस्थ इव द्विपेंद्रः ७ ल
ताप्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचार दावं रक्षापदेशान्मुनिहोमधेनो
र्वन्यान्विनेष्यन्निव दुष्टसत्वान् ८ विसृष्टपार्श्वानुचरस्य तस्य पार्श्वद्रुमाः पाशभृता
समस्य उदीरयामासुरिवोन्मदानामालोकशब्दं वयसां विरावैः ९ मरुत्प्रयुक्ता
श्च मरुत्सखाभं तमर्च्यमारादभिवर्तमानं अवाकिरन्बाललताः प्रसूनैराचारला
जैरिव पौरकन्याः १० धनुर्भृतोप्यस्य दयार्द्रभावमाख्यातमंतःकरणैर्विशंकैः
विलोकयंत्यो वपुरापुरक्ष्णां प्रकामविस्तारफलं हरिण्यः ११ स कीचकैर्मारुत
पूर्णरंध्रैः कूजद्भिरापादितवंशकृत्यं शुश्राव कुंजेषु यशः स्वमुच्चैरुद्गीयमानं ५
वनदेवताभिः १२ पृक्तस्तुषारैर्गिरिनिर्झराणामनोकहाकंपितपुष्पगंधिः तम

तपक्षांतशानातपत्र माचारपूतं पवनः सिषेवे १३ शशाम वृष्ट्यापि विना दवाग्निरासीद्विशे
षात्फलपुष्पवृद्धिः ऊनं न सत्वेष्वधिको बबाधे तस्मिन्वनं गोप्तरि गाहमाने १४ संचारपूता
नि दिगंतराणि कृत्वा दिनांते निलयाय गंतुं प्रचक्रमे पल्लवरागताम्रा प्रभा पतंगस्य मु
नेश्च धेनुः १५ तां देवतापित्रतिथिक्रियार्थामन्वग्ययौ मध्यमलोकपालः बभौ च सा
तेन सतां मतेन श्रद्धेव साक्षाद्विधिनोपपन्ना १६ स पल्वलोत्तीर्णवराहयूथान्यावास
वृक्षोन्मुखबर्हिणानि ययौ मृगाध्यासितशाद्वलानि श्यामायमानानि वनानि पश्यन् १७
आपीनभारोद्वहनप्रयत्नाद्गृष्टिर्गुरुत्वाद्वपुषो नरेंद्रः उभावलंचक्रतुरंचिताभ्यां।
१८॥ वशिष्ठधेनोरनुयायिनं तमावर्तमानं वनिता वनांतात् पपौ निमेषालसपक्ष्मपं
क्ति रुपोषिताभ्यामिव लोचनाभ्यां १९ पुरस्कृता वर्त्मनि पार्थिवेन प्रत्युद्गता पार्थिवध
र्मपत्न्या तदंतरे सा विरराज धेनुर्दिनक्षपामध्यगतेव संध्या २० प्रदक्षिणीकृत्य पयस्वि
नीं तां सुदक्षिणा साक्षतपात्रहस्ता प्रणम्य चानर्च विशालमस्याः शृंगांतरं द्वारमिवार्थ
सिद्धेः २१ वत्सोत्सुकापि स्तिमिता सपर्यां प्रत्यग्रहीत्सेति ननंदतुस्तौ भक्त्योपपन्नेषु
हि तद्विधानां प्रसादचिह्नानि पुरःफलानि २२ गुरोः सदारस्य निपीड्य पादौ समाप्य
सांध्यं च विधिं दिलीपः दोहावसाने पुनरेव दोग्ध्रीं भेजे भुजोच्छिन्नरिपुर्निषण्णां २३॥

रघुकाव्यस्य

९

तामंतिकन्यस्तबलिप्रदीपामन्वास्य गोप्ता गृहिणीसहायः क्रमेण सुप्तामनु संविवेश सुप्तो-
त्थितां प्रातरनूदतिष्ठत् २४ इत्थं व्रतं धारयतः प्रजार्थं समं महिष्या महनीयकीर्त्तेः स-
प्त व्यतीयुस्त्रिगुणानि तस्य दिनानि दीनोद्धरणोचितस्य २५ अन्येद्युरात्मानुचरस्य भा-
वं जिज्ञासमाना मुनिहोमधेनुः गंगाप्रपातांतविरूढशष्पं गौरीगुरोर्गह्वरमा-
विवेश २६ साऽदुःप्रधर्षा मनसापि हिंस्रैः इत्यद्रिशोभाप्रहितेक्षणेन अलक्षिता-
भ्युत्पतनो नृपेण प्रसह्य सिंहः किल तां चकर्ष २७ तदीयमाक्रंदितमार्त्तसाधोर्गुहा-
निबद्धप्रतिशब्ददीर्घं रश्मिष्विवादाय नगेंद्रसक्तां निवर्त्तयामास नृपस्य दृष्टिं २८
स पाटलायां गवि तस्थिवांसं धनुर्द्धरः केसरिणं ददर्श अधित्यकायामिव धातुमय्यां
लोध्रद्रुमं सानुमतः प्रफुल्लं २९ ततो मृगेंद्रस्य मृगेंद्रगामी वधाय वध्यस्य शरं शर-
ण्यः जाताभिषंगो नृपतिर्निषंगादुद्धर्तुमैच्छत्प्रसभोद्धृतारिः ३० वामेतरस्त-
स्य करः प्रहर्त्तुर्नखप्रभाभूषितकंकपत्रे सक्तांगुलिः सायकपुंख एव चित्रार्पिता-
रंभ इवावतस्थे ३१ बाहुप्रतिष्टंभविवृद्धमन्युरभ्यर्णमागस्कृतमस्पृशद्भिः राजा
स्वतेजोभिरदह्यतांतर्भोगीव मंत्रौषधिरुद्धवीर्यः ३२ तमार्यगृह्यं निगृहीतधेनुर्म- ९
नुष्यवाचा मनुवंशकेतुं मनुष्यवाचा मनुवंशकेतुं विस्मापयन् विस्मितमात्मवृत्तौ

रूणलसिंहं निजगाद सिंहः ३३ अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात्
न पादपोन्मूलनशक्तिरंहः शिलोच्चये मूर्च्छति मारुतस्य ३४ कैलासगौरं वृषमारुरुक्षोः
पादार्पणानुग्रहपूतपृष्ठं अवेहि मां किंकरमष्टमूर्त्तेः कुंभोदरं नाम निकुंभमित्रं ३५ अ
मुं पुरः पश्यसि देवदारुं पुत्रीकृतोसौ वृषभध्वजेन यो हेमकुंभस्तननिःसृतानां स्कंदस्य मा
तुः पयसां रसज्ञः ३६ कंडूयमानेन कटं कदाचिद्वन्यद्विपेनोन्मथिता त्वगस्य अथैन
मद्रेस्तनया शुशोच सेनान्यमालीढमिवासुरास्त्रैः ३७ तदाप्रभृत्येव वनद्विपानां त्रासार्थ
मस्मिन्नहमद्रिकुक्षौ व्यापारितः शूलभृता विधाय सिंहत्वमंकागतसत्ववृत्तिः ३८॥
तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण उपस्थिता शोणितपारणा मे सुरद्वि
षश्चांद्रमसी कलेव ३९ स त्वं निवर्त्तस्व विहाय लज्जां गुरोर्भवान्दर्शितशिष्यभक्तिः
शस्त्रेण रक्ष्यं यदशक्यरक्ष्यं न तद्यशः शस्त्रभृतां क्षिणोति ४० इति प्रगल्भं पुरुषाधि
राजो मृगाधिराजस्य वचो निशम्य प्रत्याहतास्त्रो गिरिशप्रभावादात्मन्यवज्ञां शिथिली
चकार ४१ प्रत्यब्रवीच्चैनमिषुप्रयोगे तत्पूर्वभंगे वितथप्रयत्नः जडीकृतस्त्र्यंबकवी
क्षितेन वज्रं मुमुक्षन्निव वज्रपाणिः ४२ संरुद्धचेष्टस्य मृगेंद्र कामं हास्यं वचस्तद्यद
हं विवक्षुः अंतर्गतं प्राणभृतां हि वेद सर्वं भवान्भावमतोभिधास्ये ४३ मान्यः स मे स्था

रघुवंशकाव्यस्य ७

वरङ्गमेवं सगीस्थितिअस्य वक्तारदेवः गुरोरपीदं धनमाहिताग्नेर्नश्यत्पुरस्तादनुपेक्ष-
णीयं ४४ अथांधकारं गिरिकंदराणां दंष्ट्रामयूखैः शकलानि कुर्वन् भूयः सभूते-
श्वरपार्श्ववर्ती किंचिद्विहस्यार्थपतिं बभाषे एकातपत्रं जगतः प्रभुत्वं नवं वयः कांति
मिदं वपुश्च अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढः प्रतिभासि मे त्वं ४७ भूतानुकं
पा तव चेदियं गौरेका भवेत्स्वस्तिमती त्वदंते जीवन्पुनः शश्वदुपप्लवेभ्यः प्रजाः प्रजा-
नाथ पितेव पासि ४८ अथैकधेनोरपराधचंडात् गुरोः कृशानुप्रतिमाद्बिभेषि शक्यो-
स्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः ४९ तद्रक्ष कल्याणपरंप-
राणां भोक्तारमूर्जस्वलमात्मदेहं महीतलस्पर्शनमात्रभिन्नं ऋद्धं हि राज्यं पदमैंद्र-
माहुः ५० एतावदुक्त्वा विरते मृगेंद्रे प्रतिस्वनेनास्य गुहागतेन शिलोच्चयोपि क्षि-
तिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव ५१ तथा समर्थो गिरिशानुचरस्य देवानुचरं नि
शीथः श्रुत्वा तदध्यासनकातरायाः निरीक्ष्यमाणः सुतरां दयालुः ५२ क्षतात्किल त्रा-
यत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशम- ७
लीमसैर्वा ५३ कथं नु शक्योनुनयो महर्षेर्विश्राणनादन्यपयस्विनीनां इमामनूनां
सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वयास्यां ५४ सेयं स्वदेहार्पणनिःक्रयेण न्याय्या मया

यामोचयितुं भवतः न पारणा स्याद्विहता तवैवं भवेदलुप्तश्च मुनेः क्रियार्थः भवानपीदं परवानवै
ति महान्हि यत्नस्तव देवदारौ स्थातुं नियोक्तुं न हि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन ५६
किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः एकांतविध्वंसिषु मद्विधानां पिंडे
ष्वनास्था खलु भौतिकेषु ५७ संबंधमाभाषणपूर्वमाहुः वृत्तः स नौ संगतयोर्वनांते
तद्भूतनाथानुग नार्हसि त्वं संबंधिनो मे प्रणयं विहंतुं ५८ तथेति गामुक्तवते दिलीपः
सद्यः प्रतिष्टंभविमुक्तबाहुः स न्यस्तशस्त्रो हरये स्वदेहमुपानयत्पिंडमिवामिषस्य ५९
तस्मिन्क्षणे पालयितुः प्रजानामुत्पश्यतः सिंहनिपातमुग्रं अवाङ्मुखस्योपरि पुष्पवृष्टिः ।
पपात विद्याधरहस्तमुक्ता ६० उत्तिष्ठ वत्सेत्यमृतायमानं वचो निशम्योत्थितमुत्थितः सन्
ददर्श राजा जननीमिव स्वां गामग्रतः प्रस्रविणीं न सिंहं ६१ तं विस्मितं धेनुरुवाच साधो
मायां मयोद्भाव्य परीक्षितोऽसि ऋषिप्रभावान्मयि नांतकोऽपि प्रभुः प्रहर्तुं किमुतान्य
हिंस्राः ६२ भक्त्या गुरौ मय्यनुकंपया च प्रीतास्मि ते वत्स वरं वृणीष्व न केवलानां प
यसां प्रसूतिमवेहि मां कामदुघां प्रसन्नां ६३ ततः समानीय स मानितार्थी हस्तौ स्वह
स्तार्जितवीरशब्दः वंशस्य कर्तारमनंतकीर्तिं सुदक्षिणायां तनयं ययाचे ६४ संता
संतानकामाय तथेति कामं राज्ञे प्रतिश्रुत्य पयस्विनी सा दुग्ध्वा पयः पत्रपुटे मदीयं पु
त्रोपभुंक्ष्वेति तमादिदेश

वत्सस्य होमार्थविधेश्च शेषं ऋषेरनुज्ञामधिगम्य मातः ऊधस्यमिच्छामि तवोपभोक्तुं षष्ठांशमुर्व्या
इव रक्षितायाः ६६ इत्थं क्षितीशेन वशिष्ठधेनुर्विज्ञापिता प्रीततरा बभूव तदन्विता हैमवता
च्च कुक्षेः प्रत्याययावाश्रममश्रमेण ६७ तस्याः प्रसन्नेन्दुमुखः प्रसादं गुरुर्नृपाणां गुरवे नि
वेद्य प्रहर्षचिह्नानुमितं प्रियायै शशंस वाचा पुनरुक्तयेव ६८ स नन्दिनीस्तन्यमनिन्द्यात्मा
सद्वत्सलो वत्सनिपीतशेषं पपौ विशिष्टेन कृताभ्यनुज्ञः शुभ्रं यशो राशिमिवाधितृष्णः ६९
प्रातर्यथोक्तं व्रतपारणान्ते प्रस्थानिकं स्वस्त्ययनं प्रयुज्य तौ दंपती स्वां प्रति राजधानीं प्रस्थाप
यामास वशी वशिष्ठः ७० प्रदक्षिणीकृत्य हुतं हुताशमनन्तरं भर्तुररुन्धतीं च धेनुं सवत्सां च नृपः
प्रतस्थे सन्मंगलोदग्रतरानुभावः ७१ श्रोत्राभिरामध्वनिना रथेन स धर्मपत्नीसहितः सहिष्णुः य
यावनुद्घातसुखेन मार्गं स्वेनेव पूर्णेन मनोरथेन ७२ तमाहितौत्सुक्यमदर्शनेन प्रजाः प्रजार्थव्र
तकर्शिताङ्गं नेत्रैः पपुस्तृप्तिमनाप्नुवद्भिर्नवोदयं नाथमिवौषधीनां ७३ पुरंदरश्रीः पुरमुत्पताकं
प्रविश्य पौरैरभिनन्द्यमानः भुजे भुजंगेन्द्रसमानसारे भूयः स भूमेर्धुरमाससञ्ज ७४ अथ नयनसमु
त्थं ज्योतिरत्रेरिव द्यौः सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशं नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी गुरु
भिरभिनिविष्टं लोकपालानुभावैः ७५ इति रघुवंशे महाकाव्ये वरप्रदानो नाम द्वितीयः सर्गः
॥२॥ अथेप्सितं भर्तुरुपस्थितोदयं सखीजनोद्वीक्षणकौमुदीमुखं निदानमिक्ष्वाकुकुलस्य सं ६

ततः सुदक्षिणा दोहदलक्षणं दधौ १ ततो विशांपत्युरनन्यसंतते मनोरथं किं विविदि दयोः

मुखं अनन्य सोदार्ह रसस्य दोहदं प्रियां प्रपेदे प्रकृतिं प्रियंवदा २ पाठांतरं मुखेप्सा

केतनपत्रपांडुना कृशांगयष्टिः परमेय भूषणा स्थिताल्पतारां वरुणांशु मंडले विभातक

ल्पां रजनीं नयत ३ मुखेन शालाल्पतरोष्ठपांडुना तनुप्रकाशेन विचेयतारका विभात

कल्पा शशिनेव शर्वरी शरीरसादादसमग्रभूषणा ४ पाठांतरं तदाननं सेवितमृत्तिकाल

वं नृपः समाघ्राय नतृप्तिमाययौ करीव सिक्तं पृषतैः पयोमुचां शुचिव्यपाये वनराजिपल्वलं

दिवं मरुत्वानिव भोक्ष्यते भुवं दिगंत विश्रांतरथो हि तत्सुतः अतोभिलाषे प्रथमे तथा विधे

मनो बबंध अन्यरसान्विलंघ्य सा ६ नमेह्रिया शंसति किंचिदीप्सितं स्पृहावती वस्तुषु केषु मा

गधी इति स्म पृच्छत्यनुवेलमादृतः प्रियासखीरुत्तरकोशलेश्वरः ७ उपेत्य सा दोहदुःख

शीलतां यदेव वव्रे तदपश्यदाहृतं नहीष्टमस्य त्रिदिवेपि भूपते र्बभूव दुःप्रापमधिज्यध

न्वनः दिनेषु गच्छत्सु मधूक पांडुरं तदीयमाश्यामलमुखं स्तनद्वयं समुन्नयो वरिणद्वं तकोश

योः वीगार कांतिं गलद्वोपिधानयोः ८ दिनेषु गच्छत्सु नितांतपीवरं तदीयमानीलमुखं स्त

नद्वयं तिरश्चकार भ्रमराभिनीलयोः तिरश्चकार भ्रमराभिनीलयोः सुजातयोः पंकजकोश

योः श्रियं पाठांतरं क्रमेण निस्तीर्य च दोहदव्यथां प्रचीयमानावयवा रराज सा पुराणपत्राप

गमादनंतरं लतेव संनद्धमनोज्ञपल्लवा १० निधानगर्भामिव सागरांबरां शमीमिवाभ्यंतरलीन
पावकं नदीमिवांतःसलिलां सरस्वतीं नृपः ससत्वां महिषीममन्यत ११ प्रियानुरागस्य मनः
समुन्नतेर्भुजार्जितानांच दिगंतसंपदां यथाक्रमं पुंसवनादिकाः क्रियाः धृतेश्च धीरः सदृ
शीर्व्यधत्त सः १२ सुरेंद्रमात्राश्रितगर्भगौरवात्प्रयत्नमुक्तासनया गृहागतः तयोपचारांजलि
खिन्नहस्तया ननंद पारिप्लवनेत्रया नृपः १३ कुमारभृत्याकुशलैरधिष्ठिते भिषग्भिराप्ते
रथगर्भर्मणि निरत्यया प्रजसवायतस्तुषी वलौ समासन्नफला क्रियेव सा १४ ग्रहैस्ततः पं
चभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसंपदं असूत पुत्रं समये शची समा त्रिसाधना श
क्तिरिवार्थमक्षयं १५ दिशः प्रसेदुर्मरुतो ववुः सुखाः प्रदक्षिणार्चिर्हविरग्निराददे ब
भूव सर्वं शुभशंसि तत्क्षणं भवो हि लोकाभ्युदयाय तादृशां १६ अरिष्टशय्यां परितो वि
सारिणा सुजन्मनस्तस्य निजेन तेजसा निशीथदीपाः सहसा हतत्विषो बभूवुरालेख्य
समर्पिता इव १७ जनाय शुद्धांतचराय शंसते कुमारजन्मामृतसंमिताक्षरं अदेयमा
सीत्त्रयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे १८ संवीक्ष्य पुत्रस्य विराजितामुखं निध्या
नकं तस्य सुवेवडर्गतः मुदा शरीरे बभूव नात्मनः पयोधिरिंदूदयपूरितो यथा १९ नि
वातपद्मस्तिमितेन चक्षुषा नृपस्य कांतं पिबतः सुताननं महोदधेः पूर इवेंदुदर्शनाद्गु

रुः प्रहर्षः प्रबभूव नात्मनि २० ॥ स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोध
सा कृते । दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ २१ सुखश्रवा मंगलतू
र्यनिःस्वनाः प्रमोदनृत्यैः सह वारयोषितां न केवलं सद्मनि मागधीपतेः पथि व्यजृंभंत
दिवौकसामपि २२ न संयतस्तस्य बभूव रक्षितुर्विसर्जयेद्यं सुतजन्महर्षितः ऋणाभि
धानात् स्वयमेव केवलं तदा पितॄणां मुमुचे स बंधनात् २३ श्रुतस्य यायादयमंतमर्भकः
स्तथा परेषां युधि चेति पार्थिवः अवेक्ष्य धातोर्गमनार्थमर्थवित् चकार नाम्ना रघु
मात्मसंभवं २४ पितुः प्रयत्नात्स समग्रसंपदः शुभैः शरीरावयवैर्दिने दिने पुपोष वृद्धिं ह
रिदश्वदीधितेरनुप्रवेशादिव बालचंद्रमाः २५ उमावृषांकौ शरजन्मना यथा यथा ज
यंतेन शचीपुरंदरौ तथा नृपः सा च सुतेन मागधी ननंदतुस्तत्सदृशेन तत्समौ २६ रथां
गनाम्नोरिव भावबंधनं बभूव यत्प्रेम परस्पराश्रयं विभक्तमप्येकसुतेन तत्तयोः प
रस्परस्योपरि पर्यचीयत २७ उवाच धात्र्या प्रथमोदितं वचो ययौ तदीयामवलंब्य
चांगुलिं अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोर्भकः २८ तमंकमारो
प्य शरीरयोगजैः सुखैर्निषिंचंतमिवामृतं त्वचि उपांतसंमीलितलोचनो नृपश्चिरात्
सुतस्पर्शरसज्ञतां ययौ २९ अमंस्त चानेन परार्द्धजन्मना स्थितेरभेत्ता स्थितिमंतमन्व

यं स्वमूर्त्तिनिरैक्षत गुणाभ्यवर्त्तिना पतिः प्रजानामिव सर्गमात्मनः ॥२७॥ स वृत्तचूलश्चलकाकपक्षकै-
रमात्यपुत्रैः सवयोभिरन्वितः लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् ॥२८॥
अथोपनीतं विधिवद्विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियं अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रि-
या हि वस्तूपहिता प्रसीदति ॥२९॥ धियः समग्रैः स गुणैरुदारधीः क्रमाच्चतस्रश्चतुरर्णवोपमाः
ततार विद्याः पवनातिपातिभिः। दिशो हरिद्भिर्हरितामिवेश्वरः ॥३०॥ त्वचं स मेध्यां परिधाय रौ-
रवीमशिक्षतास्त्रं पितुरेव मंत्रवित् न केवलं तद्गुरुरेकपार्थिवः क्षितावभूदेकधनुर्धरोपि
सः ॥३१॥ महोक्षतां वत्सतरः स्पृशन्निव द्विपेंद्रभावं कलभः श्रयन्निव रघुः क्रमाद्यौवनभि-
न्नशैशवः पुपोष गांभीर्यमनोहरं वपुः ॥३२॥ अथास्य गोदानविधेरनंतरं विवाहदीक्षां निरव-
र्त्तयद्गुरुः नरेंद्रकन्यास्तमवाप्य सत्पतिं तमोपहं दक्षसुता इवाबभुः ॥३३॥ युवा युगव्याय-
तबाहुरंसलः कपाटवक्षाः परिणद्धकंधरः वपुःप्रकर्षादजयद्गुरुं रघुः तथापि नीचै-
र्विनयाददृश्यत ॥३४॥ ततः प्रजानां चिरमात्मना धृतां नितांतगुर्वी लघयिष्यता धुरं निस-
र्गसंस्कारविनीत इत्यसौ नृपेण चक्रे युवराजशब्दभाक् ॥३५॥ नरेंद्रमूलायतनादनंतरं
तदास्पदं श्रीर्युवराजसंज्ञितं अगच्छदंशेन गुणाभिलाषिणी नवावतारं कमलादिवो २०
त्पलं ॥३६॥ विभावसुः सारथिनेव वायुना घनव्यपायेन गभस्तिमानिव बभूव तेनातित-

रंसुतःसहः कटप्रबाहुना करीव पार्थिवः ४० नियुज्य तं होमतुरंगरक्षणे धनुर्धरं राजसु
तैरनुद्रुतं अपूर्णमेकेन शतक्रतूपमः शतं क्रतूनामपविघ्नमाप सः ४१ ततः परं तेन म
खाय यज्वना तुरंगमुत्सृष्टमनर्गलं पुनः धनुर्भृतामग्रत एव रक्षितां जहार शक्रः किल
गूढविग्रहः ४२ विषादलुप्तप्रतिपत्तिविस्मितं कुमारसैन्यं सपदि स्थितं च तत् वशिष्ठधे
नुश्च यदृच्छयागता श्रुतप्रभावा ददृशेऽथ नंदिनी ४३ तदंगनिस्यंदजलेन लोचने प्रमृज्य
पुण्येन पुरस्कृतः सतां अतींद्रियेष्वप्युपपन्नदर्शनो बभूव भावेषु दिलीपनंदनः ४४
स पूर्वतः पर्वतपक्षशातनं ददर्श देवं नरदेवसंभवः पुनः पुनः सूतनिषिद्धचापलं हरं
तमश्वं रथरश्मिसंयुतं ४५ शतैस्तमक्ष्णामनिमेषवृत्तिभिर्हरिं विदित्वा हरिभिश्च वाजिभिः
अवोचदेनं गगनस्पृशा रघुः स्वरेण धीरेण निवर्तयन्निव ४६ मखांशभाजां प्रथमो म
नीषिभिः अवोच देवेंद्र यतो निगद्यसे अजस्रदीक्षाप्रयतस्य मद्गुरोः क्रियाविघाताय
कथं प्रवर्तसे ४७ त्रिलोकनाथेन सदा मखद्विष स्त्वया नियम्या ननु दिव्यचक्षुषा स चे
त्स्वयं कर्मसु धर्मचारिणां त्वमंतरायो भवसि च्युतो विधिः ४८ तदंगमग्र्यं मघवन्महाक्र
तो रमुं तुरंगं प्रतिमोक्तुमर्हसि पथः श्रुतेर्दर्शयितार ईश्वरा मलीमसामाददते न पद्धतिं
४९ इति प्रगल्भं रघुणा समीरितं वचो निशम्याधिपतिर्दिवौकसां निवर्तयामास रथं स

विस्मयः सचक्रमेव सतिव कुसुत्तरं ५० यदात्थ राजन्यकुमार तत्तथा यशस्तु रक्ष्यं परतो यशोधनैः जगत्प्रकाशं तदशेषमिज्यया भवद्गुरुर्लंघयितुं ममोद्यतः ५१ हरेर्यदिकः पुरुषोत्तमो
मते महेश्वरस्त्र्यंबक एव नापरः तथाविदुर्मां मुनयः शतक्रतुं द्वितीयगामी नहि शब्द एष नः
५२ अतोयमश्वः कपिलानुकारिणा पितुस्त्वदीयस्य मयापहारितः अलं प्रयत्नेन तवात्र मा
निधाः पदं पदव्यां सगरस्य संततेः ५३ ततः प्रहस्यापभयः पुरंदरं पुनर्बभाषे तुरगस्य रक्षि
ता गृहाण शस्त्रं यदि सर्ग एष ते न खल्वनिर्जित्य रघुं कृती भवान् ५४ स एवमुक्त्वा मघवंत
मुन्मुखः करिष्यमाणः सशरं शरासनं अतिष्ठदालीढविशेषशोभिना वपुःप्रकर्षेण वि
डंबितेश्वरः रघोरवष्टंभमयेन पत्रिणा हृदि क्षतो गोत्रभिदप्यमर्षणः नवाम्बुदानीकमुहू
र्तलांछने धनुष्यमोघं समधत्त सायकं ५६ नरेंद्रसूनोः स हृदन्तरं प्रविश्य भीमासु
रशोणितोचितः पपावनास्वादितपूर्वमाशुगः कुतूहलेनेव मनुष्यशोणितं ५७ हरेः कु
मारोपि कुमारविक्रमः सुरद्विपास्फालनकर्कशांगुलौ भुजे शचीपत्रलताक्रियोचिते स्व
नामचिह्नं निचखान सायकं ५८ जहार चान्येन मयूरपत्रिणा शरेण शक्रस्य महाशनिध्व
जं चुकोप तस्मै स भृशं सुरश्रियः प्रसह्य केशव्यपरोपणादिव ५९ तयोरुपांतस्थितसिद्धसै २२
निकं गरुत्मदाशीविषभीमदर्शनैः बभूव युद्धं तुमुलं जयैषिणोरधोमुखैरूर्ध्वमुखैश्च पत्रि

रिरिः ६० इति प्रबंधप्रहितास्त्रवृष्टि स्वमाश्रयं क्षुः प्रदर्सस्य तेजसः शशांकनिर्वापि-
यितेन वासवः क्षतक्षुतं वक्षि शिवाङ्घ्रि रंघुरः ६१ ततः प्रकोष्टे हरिचंदनांकिते प्रम-
थ्यमानार्णवधीरनादिनीं रघुः शशांकार्द्धमुखेन पत्रिणा सरासनज्यां मलुनाद्बिडौजसः
६२ स चापमुत्सृज्य विवृद्धमत्सरः प्रणाशनाय प्रबलस्य विद्विषः महीध्रपक्षव्यपरो-
पणोचितं स्फुरत्प्रभामंडलमस्त्रमाददे ६३ रघुर्भृशं वक्षसि तेन ताडितः पपात भू-
मौ सह सैनिकाश्रुभिः निमेषमात्रादवधूय तद्व्यथां सहोत्थितः सैनिकहर्षनिःस्व-
नैः ६४ तथापि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरमस्य तस्थुषः तुतोष वी-
र्यातिशयेन वृत्रहा पदं हि सर्वत्र गुणैर्विधीयते ६५ असंगमद्रिष्वपि सारवत्त-
या नमेत्वदन्येन विसोढमायुधं अवेहि मां प्रीतमृते तुरंगमात् किमिच्छसीति स्फुटमाह
वासवः ६६ ततो निषंगादसमग्रमुद्धृतं सुवर्णपुंखद्युतिरंजितांगुलिः नरेंद्र-
सूनुः प्रतिसंहरन्निषुः प्रियंवदः प्रत्यवदत्सुरेश्वरं ६७ अमोच्यमश्वं यदि मन्यसे प्र-
भो ततः समाप्ते विधिनैव कर्मणि अजस्रदीक्षाप्रयतस्य मद्गुरः क्रतोरशेषेण फ-
लेन युज्यतां ६८ यथा स वृत्तांतमिमं सदोगतः त्रिलोचनैकांशतया दुरासदः
तवैव संदेशहराद्विशांपतिः शृणोति देवेश तथा विधीयतां ६९ तथेति

तथेति कामं प्रतिशुश्रुवान्रघोर्यथागतं मातलिसारथिर्ययौ नृपस्य नातिप्रमनाः सदोगृहं सुदक्षिणासूनुरपि न्यवर्तत ६७ तमभ्यनंदत्प्रथमं प्रबोधितः प्रजेश्वरः शासनहारिणा हरेः परामृशन्हर्षजडेन पाणिना तदीयमंगं कुलिशव्रणांकितं ६८ इति क्षितीशो नवतिं नवाधिकां महाक्रतूनां महनीयशासनः समारुरुक्षुर्दिवमायुषः क्षये ततान संतानपरंपरामिव ६९ अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे नृपतिककुदं दत्वा यूने सितातपवारणं मुनिवनतरुच्छायां देव्या तया सह शिश्रिये गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतं ७०। इति श्री रघुवंशे महाकाव्ये कालिदासकृतौ रघूत्पत्तिर्नाम तृतीयसर्गः ३। श्रीः सराज्यं गुरुणा दत्तं प्रतिपद्याधिकं बभौ दिनान्ते निहितं तेजः सवित्रेव हुताशनः १ न्यस्तशस्त्रं दिलीपं च तं च शुश्रुवुषां पतिं राज्ञामुद्धृतनाराचे हृदि शल्यमिवार्पितं दिलीपानंतरं राज्ये तं निशम्य प्रतिष्ठितं पूर्वं प्रधूमितो राज्ञां हृदये ग्निरिवोत्थितः २ पुरुहूतध्वजस्येव तस्योन्नयनपंक्तयः नवाभ्युत्थानदर्शिन्यो ननंदुः सप्रजाः प्रजाः ४ छायामंडललक्ष्येण तमदृश्या किल स्वयं पद्मा पद्मातपत्रेण भेजे साम्राज्यदीक्षितं ५ परिकल्पितसान्निध्या काले काले च वंदिषु स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती ६ मनुप्रभृतिभि २ २२

राजन्वंतीमाहुरिति राजन्वतीति । तथाऽनन्यपूर्वेव तस्मिन्नासीद्वसुंधरा ७ सममेव समाक्रां
तं द्वयं द्विरदगामिना तेन सिंहासनं पित्र्यमखिलं चारिमंडलं ८ नयविद्भिर्नवे राज्ञि सदस
च्चोपदर्शितं पूर्व एवाभवत्पक्षस्तस्मिन्नाभवदुत्तरः ९ मंदोत्कंठाः कृतास्तेन गुणाधिक
तया गुरौः फलेन सहकारस्य पुष्पोद्गम इव प्रजाः १० सदि सर्वस्य लोकस्य युक्तदंडतया
मनः आददे नातिशीतोष्णः नभस्वानिव दक्षिणः ११ पंचानामपि भूतानामुत्कर्षं पुपु
षुर्गुणाः नवे तस्मिन्महीपाले सर्वं नवमिवाभवत् १२ यथा प्रह्लादनाच्चंद्रः प्रतापात्तप
नो यथा तथैव सोऽभूदन्वर्थो राजा प्रकृतिरंजनात् १३ कामं कर्णांतविश्रांते विशाले त
स्य लोचने चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्यार्थदर्शिना १४ लब्धप्रशमनस्वस्थमथै
नं समुपस्थिता पार्थिवश्रीर्द्वितीयेव शरत्पंकजलक्षणा १५ निर्वृष्टलघुभिर्मेघैर्मुक्
तवर्त्मा सुदुःसहः प्रतापस्तस्य भानोश्च युगपद्व्यानशे दिशः १६ अधिज्यमायुधं कर्तुं
समयोऽयं रघोरिति स्वं धनुः शंकितेनेव संजह्रे शतमन्युना १७ वार्षिकं संजहारेंद्रो धनुर्जैत्रं
रघुर्दधौ प्रजार्थसाधने तौ हि पर्यायोद्यतकार्मुकौ १८ पुंडरीकातपत्रस्तं विकसत्का
शचामरः ऋतुर्विडंबयामास न पुनः प्रापतच्छ्रियं । तदा च क्षुष्मतां प्रीतिरासीत्स
मरसा द्वयोः २०॥ हंसश्रेणीषु तारासु कुमुद्वत्सु च वारिषु विभूतयस्तदीयानां पा

*प्रसादसुमुखे तस्मिन्श्चंद्रे च विशदप्र... ।

र्थमालायनमासमिव २१ इक्षुछायानिषादन्य स्तस्य गोप्तुर्गुणोदयं आकुमारकथोद्घातं शा
लिगोप्यो जगुर्यशः २२ प्रससादोदयादंभः कुंभयोनेर्महौजसः रघोरभिभवाशं
कि द्विषतां चक्षुभे मनः २३ मदोदग्राः ककुद्मंतः सरितां कूलमुद्रुजाः लीलाखे
लमनुप्रापुर्महोक्षास्तस्य विक्रमात् २४ प्रसवैः सप्तपर्णानां मदगंधिभिराहताः अ
सूययेव तन्नागाः सप्तधैव प्रसुस्रुवः २५ सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमा
न् यात्रायै प्रेरयामास तं शक्तेः प्रथमं शरत् २६ तस्मै सम्यग्घुतो वह्निः वाजिनीरा
जनाविधौ प्रदक्षिणार्चिर्व्याजेन हस्तेनेव जयं ददौ २७ स गुप्तमूलप्रत्यंतः शुद्धः पार्ष्णि
रयान्वितः षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया २८ अवाकिरन्वयोवृद्धा
स्तं लाजैः पौरयोषितः पृषतैर्मंदरोद्धूतैः क्षीरोर्मय इवाच्युतम् २९ स ययौ प्रथमं
प्राचीं तुल्यः प्राचीनबर्हिषा अहितानिलनिर्धूतैः तर्जयन्निव केतुभिः ३० रजोभि
स्यंदनोद्धूतैर्गजैश्च घनसन्निभैः भुवस्तलमिव व्योम कुर्वन्व्योमेव भूतलं ३१ मरु
पृष्ठान्युदंभांसि नाव्याः सुप्रतरा नदीः विपिनानि प्रकाशानि शक्तिमत्त्वाच्चकार सः।
३२ प्रतापोऽग्रे ततः शब्दः परागस्तदनंतरं ययौ पश्चाद्रथानीकं चतुःस्कंधेव सा चमूः
३३। पुरोगैः कलुषास्तस्य सपद्यस्थायिभिः कृताः पश्चात्प्रयायिभिः पंकाच्छिद्रिरमागी

मार्गैर्निम्नगाः ३४ स सेनां महतीं कर्षन् पूर्वसागरगामिनीं बभौ हरजटाभ्रष्टां गंगामिव भगीर
थः ३५ त्याजितैः फलमुत्खातैः भग्नैश्च बहुधा नृपैः तस्यासीदुल्बणो मार्गः पादपैरिव दं
तिभिः ३६ पौरस्त्यानेवमाक्रामंस्तांस्तान् जनपदान् जयी प्राप तालीवनश्याममुपकंठं
महोदधेः ३७ अनम्राणां समुद्धर्तुस्तस्मात् सिंधुरयादिव आत्मा संरक्षितः सुह्मैर्वृत्ति
माश्रित्य वैतसीं ३८ वंगानुत्खाय तरसा नेता नौसाधनोद्यतान् निचखान जयस्तंभा
न् गंगास्रोतोऽन्तरेषु सः ३९ आपादपद्मप्रणताः कलमा इव ते रघुं फलैः संवर्धया
मासुरुत्खातप्रतिरोपिताः ४० स तीर्त्वा कपिशां सैन्यैर्बद्धद्विरदसेतुभिः उत्कला
दर्शितपथः कलिंगाभिमुखो ययौ ४१ स प्रतापं महेंद्रस्य मूर्ध्नि तीक्ष्णं न्यवेशयत् अं
कुशं द्विरदस्येव यंता गंभीरवेदिनः ४२ प्रतिजग्राह कालिंगस्तमस्त्रैर्गजसाधनः प
क्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः ४३ द्विषां विषह्य काकुत्स्थस्तत्र नाराचदुर्दिनं
सन्मंगलस्नात इव प्रतिपेदे जयश्रियं ४४ अन्पत्स्यत बाहानां चरतां गात्रसिंजतैः
मर्मरैः पवनोद्भूतराजतालीवनध्वनिः ४५ वायव्यास्त्रविनिर्धूतात् पक्षाविद्धान्महोद
धेः गजानीकात्स कालिंगं तार्क्ष्यः सर्पानिवाददे ४६ तांबूलीनां दलैस्तत्र रचितापा
नभूमयः नारिकेलासवं योधाः शात्रवं च पपुर्यशः ४७ गृहीतप्रतिमुक्तस्य स धर्म

विजयी रघुः श्रियं महेंद्रनाथस्य जहार नत्रमेदनी ततो वेलातटेनैव फलवत्पूगमालिना अ
गस्त्याचरितामासा मनाशास्यजयो ययौ ४९ ससैन्यपरिभोगेन गजदानसुगंधिना कावेरीं
सरितां पत्युः शंकनीयामिवाकरोत् ५० बलैरध्युषितास्तस्य विजिगीषोर्गताध्वनः मा
रीचोद्भ्रांतहारीता मलयाद्रेरुपत्यकाः ५१ भयोत्सृष्टविभूषाणां तेन केरलयोषितां अ
लकेषु चमूरेणुश्चूर्णप्रतिनिधीकृतः ५२ ससंजुरश्वक्षुण्णानामेलानामुत्पतिष्णवः तु
ल्यगंधिषु मत्तेभकटेषु फलरेणवः ५३ भोगिवेष्टनमार्गेषु चंदनानां समर्पितं नास्रंसत्क
रिणां ग्रैवं त्रिपदीछेदनामपि ५४ दिशि पंदायते तेजो दक्षिणस्यां रवेरपि तस्यामेव र
घोः पांड्या नास्रंसत्करिणां ग्रैवं त्रिपदीछेदिनामपि ५४ दिशि पंदायते तेजो दक्षिण
स्यां रवेरपि तस्यामेव रघोः पांड्या प्रतापं न विषेहिरे ५५ ताम्रपर्णीसमेतस्य मुक्तासारं
महोदधेः ते निपत्य ददुस्तस्मै यशः स्वमिव संचितं ५६ स निर्विश्य यथाकामं तटेष्वाली
नचंदनौ स्तनाविव दिशस्तस्याः शैलौ मलयदर्दुरौ ५७ असह्यविक्रमः सह्यं दूरमु
क्तमुदन्वता नितंबमिव मेदिन्याः स्रस्तांशुकमलंघयत् ५८ तस्यानीकैर्विसर्पद्भिरप
रांतजयोद्यतैः रामास्त्रोत्सारितोप्यासीत्स [illegible] मरुलामारुतोद्धूत
मगमत्कैतकं रजः तद्योधवारबाणानामयत्नपटवासत खर्जूरीस्कंधनद्धानां मदो

द्गारसुगंधिषु कटेषु करिणां पेतुः पुंनागेभ्यः शिलीमुखाः ६१ अवकाशं किलोदन्वान्
रामायाभ्यर्थितो ददौ अपरांतमहीपालव्याजेन रघवे करं ६२ मत्तेभरदनोत्कीर्णव्य
क्तविक्रमलक्षणं त्रिकूटमेव तत्रोच्चैर्जयस्तंभं चकार सः ६३ पारसीकांस्ततो जेतुं
प्रतस्थे स्थलवर्त्मना इंद्रियाख्यानिव रिपूंस्तत्त्वज्ञानेन संयमी ६४ यवनीमुखपद्मानां
सेहे मधुमदं न सः बालातपमिवाब्जानामकालजलदोदयः ६५ संग्रामस्तुमुलस्तस्य
पाश्चात्यैरश्वसाधनैः शार्ङ्गकूजितविज्ञेयप्रतियोधे रजस्यभूत् ६६ भल्लापवर्जितैस्ते
षां शिरोभिः श्मश्रुलैर्महीं तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव ६७ अपनीतशिर
स्त्राणाः शेषास्तं शरणं ययुः प्रणिपातप्रतीकारः संरंभो हि महात्मनां ६८ विनयंते स्म त
द्योधा मधुभिर्विजयश्रमं आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ६९ ततः प्रतस्थे कौ
बेरीं भास्वानिव रघुर्दिशं शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव ७० जितान ज
नेव रथवरः सरान् महार्णवमिवोर्मिभिः प्रविवेशोत्तरापथं ७१ विनीताध्वश्र
मास्तस्य वंक्षुतीरविचेष्टनैः दुधुवुर्वाजिनः स्कंधान् लग्नकुंकुमकेसरान् ७२ तत्र
हूणावरोधानां भर्तृषु व्यक्तविक्रमं कपोलपाटलादेशि बभूव रघुचेष्टितं ७३ कांबोजाः
समरे सोढुं तस्य वीर्यमनीश्वराः गजालानपरिक्लिष्टैरक्षोटैः सार्धमानताः ७४ तेषां

सदिश्वस्त्वयष्पस्कं गद्रविणराशयः विविशुस्तं विशांनाथमुदन्वंतमिवापगाः ७५ त
तो गौरीगुरुं शैलमारुरोहाश्वसाधनः वर्द्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभिः ७६ श
शंस तुल्यसत्वानां सैन्यघोषेप्यसंभ्रमं गुहाशयानां सिंहानां परिवृत्यावलोकितं।
७७। भूर्जेषु मर्मरीभूताः कीचकध्वनिहेतवः गंगाशीकरिणो मार्गे मरुतस्तं सि
षेविरे ७८ विशश्रमुर्नमेरूणां छायास्वाध्यास्य सैनिकाः दृषदो वासितोत्संग
निषण्णमृगनाभिभिः ७९ सरलासक्तमातंगग्रैवेयस्फुरितत्विषः आसन्नोषधयो नेतुर्न
क्तमस्नेहदीपिकाः ८० तस्योत्सृष्टनिवासेषु कंठरज्जुक्षतत्वचः गजवर्ष्म किरा
तेभ्यः शशंसुर्देवदारवः ८१ तत्र जन्यं रघोर्घोरं पार्वतीयैर्गणैरभूत नाराचक्षेपणी
याश्मनिष्पेषोत्पतितानलं ८२ शरैरुत्सवसंकेतान् कृत्वा विरतोत्सवान् जयो
दाहरणं बाह्वोर्गापयामास किंनरान् ८३ परस्परेण विज्ञातस्तेषूपायनपाणिषु रा
ज्ञा हिमवतः सारो राज्ञः सारो हिमाद्रिणा ८४ तत्राक्षोभ्यं यशोराशिं निवेश्यावरुरोह सः
पौलस्त्यतुलितस्याद्रेरादधान इव ह्रियं ८५ चकंपे तीर्णलौहित्ये तस्मिन्प्राग्ज्योति
षेश्वरः तद्गजालानतां प्राप्तैः सह कालागुरुद्रुमैः ८६ न प्रसेहे स रुद्धार्कमधारावर्ष २५
दुर्दिनं रथवर्त्मरजोप्यस्य कुत एव पताकिनीं ८७ तमीशः कामरूपाणामत्याखं

डलविक्रमा भेजे भिन्नकटैर्नागैरन्यानुपरुरोधयैः ८८ कामरूपेश्वरस्तस्य हेमपीठाधि
देवतां रत्नपुष्पोपहारेण छायामानर्च पादयोः ८९ इति जित्वा दिशो जिष्णुर्न्यवर्त्तत रथो
द्धतं रजो विश्रामयन् राज्ञां छत्रशून्येषु मौलिषु ९० स विश्वजितमाजह्रे यज्ञं सर्वस्व
दक्षिणं आदानं हि विसर्गाय सतां वारिमुचामिव ९१ सत्रांते सचिवसखः पुरस्
क्रियाभिर्गुर्वीभिः शमितपराजयव्यलीकान् काकुत्स्थः चिरविरहोत्सुकावरोधान् रा
जन्यान् स्वपुरनिवृत्तये नुमेने ९३ ते रेखाध्वजकुलिशातपत्रचिह्नं सम्राजश्चरणयुगं
प्रसादलभ्यं प्रस्थानप्रणतिभिरंगुलीषु चक्रुः मौलिस्रक्च्युतमकरंदरेणुगौरं ९
४। यज्ञांते तमवभृथाभिषेकपूतं सत्कारैः शमितपराजयव्यलीकाः ग्रामं ग्रो
त्सुकवनितानितंबिदृष्टाः स्वानि स्थान्यवनिभुजः पुराणि जग्मुः ९५ इति श्रीरघु
वंशे महाकाव्ये दिग्विजयवर्णनो नाम चतुर्थः सर्गः ४॥ छः छः छः।श्री
तमध्वरे विश्वजिति क्षितीशं निःशेषविश्राणितकोशजातं उपात्तविद्यो गुरुदक्षि
णार्थी कौत्सः प्रपेदे वरतंतुशिष्यः १ स मृन्मये वीतहिरण्मयत्वात् पात्रे निधाय
र्घ्यमनर्घ्यशीलः श्रुतप्रकाशं यशसा प्रकाशः प्रत्युज्जगामातिथिमातिथेयः २ त
मर्चयित्वा विधिवद्विधिज्ञः तपोधनं मानधनाग्रयायी विशांपतिर्विष्टरभाजमारा

रालं सताञ्जलिः कृत्यविदित्युवाच ३ अप्यग्रणीर्मंत्रकृतामृषीणां कुशाग्रबुद्धे कुशली गुरु
स्ते यतस्त्वया ज्ञानमशेषमाप्तं चैतन्यमग्रादिव दीधितेन ४ कायेन वाचा मनसापि शश्व
द्यद्वज्रिणो धैर्यविलोपि तत् आपाद्यते न व्ययमन्तरायैः कच्चिन्महर्षेस्त्रिविधं तपस्तत् ५ आ
धारबंधप्रमुखैः प्रयत्नैः संवर्द्धितानां सुतनिर्विशेषं कच्चिन्न वाय्वादिरुपप्लवो वः । श्रमच्छिदामाश्र
मपादपानां ६ क्रियानिमित्तेष्वपि वत्सलत्वादभग्नकामा मुनिभिः कुशेषु तदंकशय्याच्युतना
भिनाला कच्चिन्मृगीणामनघा प्रसूतिः ७ निर्वर्त्यते यैर्नियमाभिषेको येभ्यो निवापांज
लयः पितॄणां तान्युञ्छषष्ठांकितसैकतानि शिवानि वस्तीर्थजलानि कच्चित् ८ नीवारपा
कादि कडंगरीयैरामृश्यते जानपदैर्न कच्चित् कालोपपन्नातिथिकल्प्यभागं वन्यं शरीर
स्थितिसाधनं वः ९ अपि प्रसन्नेन महर्षिणा त्वं सम्यग्विनीयानुमतो गृहाय कालो
ह्ययं संक्रमितुं द्वितीयं सर्वोपकारक्षममाश्रमं ते १० तवार्हतो नाभिगमेन तृप्तं म
नो नियोगक्रिययोत्सुकं मे अप्याज्ञया शासितुरात्मना वा प्राप्तोऽसि संभावयितुं वना
न्मां ११ इत्यर्घ्यपात्रानुमितव्ययस्य रघोरुदारामपि गां निशम्य स्वार्थोपपत्तिं प्रति
दुर्बलाशः उत्साहकोत्सस्तमपेतकोशः १२ तमित्यवोचद्वरतंतुशिष्यः प्रार्थान्त
रं सर्वत्र नो वार्तमवेहि राजन्नाथे कुतस्त्वय्यशुभं प्रजानां सूर्ये तपत्यावरणाय दृ

ष्टेः कल्पेत लोकस्य कथं तमिस्रा १२ भक्तिः प्रतीक्ष्येषु कुलोचितेति पूर्वान्महाभाग तया
तिशेषे व्यतीतकालस्त्वहमभ्युपेतस्त्वामर्थिभावादिति मे विषादः १४ शरीरमात्रेण नरेंद्र
तिष्ठन्नाभासि तीर्थप्रतिपादितर्द्धिः आरण्यकोपात्तफलप्रसूतिः स्तंबेन नीवार इवावशि
ष्टः १५ स्थाने भवानेकनराधिपः सन्नकिंचनत्वं मखजं व्यनक्ति पर्यायपीतस्य सुरैर्हि
मांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः १६ तदन्यतस्तावदनन्यकार्यो गुर्वर्थमाहर्तुमहं
यतिष्ये स्वस्त्यस्तु ते निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोपि १७ एतावदुक्त्वा प्रतिया
तुकामं शिष्यं महर्षेर्नृपतिर्निषिध्य किं वस्तु विद्वन्गुरवे प्रदेयं त्वया कियद्वेति तमन्व
युंक्त १८ ततो यथावद्विहिताध्वराय तस्मै स्मयावेशविवर्जिताय वर्णाश्रमाणां गुर
वेशाविवर्जिताय वर्णाश्रमाणां गुरवे स वर्णी विचक्षणः प्रस्तुतमाचचक्षे १९ समाप्त
विद्येन मया महर्षिर्विज्ञापितो भूद्गुरुदक्षिणायै स मे चिरायास्खलितोपचारां तां भ
क्तिमेवागणयत्पुरस्तात् २० निर्बंधसंजातरुषार्थकार्श्यमचिंतयित्वा गुरुणाहमुक्तः
वित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेति २१ सोहं सपर्याविधिभाज
नेन मत्वा भवंतं प्रभुशब्दशेषं अभ्युत्सहे संप्रति नोपरोद्धुं अल्पेतरत्वाच्छ्रुतनिष्क्रया
स्य २२ इत्थं द्विजेन द्विजराजकांतिरावेदितो वेदविदां वरेण एनोनिवृत्तेंद्रियवृत्तिरे

ने ऽगादस्तूयोऽग नाथः २३ गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामः ग
तो वदान्यांतरमित्ययं मे मा भूत्परीवादनवावतारः २४ स त्वं प्रशस्ते महिते मदीये
वसंश्चतुर्थोग्निरिवाग्न्यगारे द्वित्राण्यहान्यर्हसि सोढुमर्हन् यावद्यते साधयितुं त्वदर्थं
२५ तथेति तस्यावितथः प्रतीतः प्रत्यग्रहीत्संगिरमग्रजन्मा गामात्तसारां रघुरप्यवेक्ष्य निष्
क्रष्टुमर्थं चकमे कुबेरात् २६ वसिष्ठमंत्रोक्षणजात्प्रभावा उदन्वदाकाशमहीधरेषु म
रुत्सखस्येव बलाहकस्य गतिर्विजघ्ने न हि तद्रथस्य २७ अथाधिशिश्ये प्रयतः प्रदोषे
रथं रघुः कल्पितशस्त्रगर्भं सामंतसंभावनयैव धीरः कैलासनाथं तरसा जिगीषुः २८
प्रातः प्रयाणाभिमुखाय तस्मै सविस्मयाः कोशगृहे नियुक्ताः हिरण्मयीं कोशगृहस्य
मध्ये वृष्टिं शशंसुः पतितां नभस्तः २९ तं भूपतिर्भासुरहेमराशिं लब्धं कुबेरादभिया
स्यमानात् दिदेश कौत्साय समस्तमेव शृंगं सुमेरोरिव वज्रभिन्नं ३० जनस्य साकेतनि
वासिनस्तौ द्वावप्यभूतामभिनंद्यसत्वौ गुरुप्रदेयाधिकनिःस्पृहोर्थी नृपोर्थिकामाद
धिकप्रदश्च ३१ अथोष्ट्रवामीशतवाहितार्थं प्रजेश्वरं प्रीतमनाः महर्षिः स्पृशन्करे
णानतपूर्वकायं संप्रस्थितो वाचमुवाच कौत्सः ३२। किमत्र चित्रं यदि कामसूर्भू २७
र्वृत्ते स्थितस्याधिपतेः प्रजानां अचिंतनीयस्तु तव प्रभावो मनीषितं द्यौरपि येन दुग्धाः

३२ आसन्नमन्त्यत्सुनरुक्तवृत्तं श्रेयांसि सर्वाण्यधिजग्मुषस्ते पुत्रं लभस्वात्मगुणानुरू
पं भवंतमीड्यं भवतः पितेव ३४ इत्थं प्रयुज्याशिषमग्रजन्मा राज्ञे प्रतीयाय गुरोः सका
शं राजापि लेभे सुतमाशु तस्मा दालोकमर्कादिव जीवलोकः ३५ ब्राह्मे मुहूर्ते कि
ल तस्य देवी कुमारकल्पं सुषुवे कुमारं अतः पिता ब्रह्मण एव नाम्ना तमात्मजन्मानम
जं चकार ३६ रूपं तदोजस्वि तदेव वीर्यं तदेव नैसर्गिकमुन्नतत्वं न कारणात्स्वाद्बिभि
दे कुमारः प्रवर्तितो दीप इव प्रदीपात् ३७ उपात्तविद्यं विधिवद्गुरुभ्यस्तं यौवनोद्भेद
विशेषकांतं श्रीः साभिलाषापि गुरोरनुज्ञां धीरेव कन्या पितुराचकांक्षे ३८ अथेश्वरे
ण क्रथकैशिकानां स्वयंवरार्थं स्वसुरिंदुमत्याः आप्तः कुमारानयनोत्सुकेन भोजेन दूतो
रघवे विसृष्टः ३९ तं श्लाघ्यसंबंधमसौ विचिंत्य दारक्रियायोग्यदशं च पुत्रं प्रस्थापया
मास ससैन्यमेनं ऋद्धां विदर्भाधिपराजधानीं ४० तस्योपकार्यारचितोपचारा वन्येतरा जा
नपदोपदाभिः मार्गे निवासा मनुजेंद्रसूनोः बभूवुरुद्यानविहारकल्पाः ४१ स नर्म
दारोधसि सीकरार्द्रैः मरुद्भिरानर्तितनक्तमाले निवेशयामास विलंघिताध्वा क्लांतं र
जोधूसरकेतुसैन्यं ४२ अथोपरिष्टाद्भ्रमरैर्भ्रमद्भिः प्राक्सूचितांतःसलिलप्रवेशः
निर्धौतदानामलगंडभित्तिः वन्यः सरित्तो गज उन्ममज्ज ४४ निःशेषविक्षालितधातु

नापि वप्रक्रियामृक्षवतस्तटेषु नीलोर्ध्वरेखाशबलेन शंसन् दंतद्वयेनाश्मविकुंठितेन ५४ सुभ
गं सतोयोत्थितपीवरेण हस्तेन ताराभिमुखः शौर्याक्षं संवेष्टितार्धप्रस्तेन दीर्घानिर्वि
ष्णेपवारीव रिपेनिर्विशमान् ५५ संहारविक्षेपलघुक्रियेण हस्तेन तीराभिमुखः सशब्दं ब
भौ स भिंदन्बृहतस्तरंगान्वार्यर्गलाभंग इव प्रवृत्तः ५६ शैलोपमः शैवलमंजरी
णां जालानि कर्षन्नुरसा स पश्चात् पूर्वं तदुत्पीडितवारिराशिः सरित्प्रवाहस्तटमुत
ससर्प ५७ कारंडवोत्सृष्टमृडजतानाः पुलिंदयोकांबुविदारकांची कर्णसिसेवा
लनवानदीप्तः औरावलमास्तटमुत्ससर्ज ५८ तस्यैकनागस्य कपोलभित्त्यौ ज
लावगाहक्षणमात्रशांता वन्येतरानेकपदर्शनेन पुनर्दिदीपे मदुर्दिनश्रीः ५९
सप्तच्छदक्षीरकटुप्रवाहमसह्यमाघ्राय मदं तदीयं विलंघिताधोरणतीव्रयत्नाः
सेनागजेंद्रा विमुखा बभूवुः ६० सच्छिन्नबंधद्रुतयुग्मशून्यं भग्नाक्षपर्यस्तरथं क्षणेन
रामापरित्राणविहस्तयोधं सेनानिवेशं तुमुलं चकार ६१ तमापतंतं नृपतेरवध्यो
वन्यः करीति श्रुतवान्कुमारः निवर्तयिष्यन्विशिखेन कुंभे जघान नात्यायत
कृष्टचापः ६२ स विद्धमात्रः किल नागरूपः मुत्सृज्य तद्विस्मितसैन्यदृष्टः स्फु
रत्प्रभामंडलमध्यवर्ति कांतं वपुर्व्योमचरं प्रपेदे ६३ अथ प्रभावोपनतैः कुमारं क

कल्प ×

९

ल्पद्रुमोत्थैरवकीर्य पुष्पैः उवाच वाग्मी दशनप्रभाभिः संवर्द्धितोरस्थलतारहारः ६४
मतंगशापादवलेपमूला दवाप्तवानस्मि मतंगजत्वं अवेहि गंधर्वपतेस्तनूजं प्रियं
वदं मां प्रियदर्शनस्य ६५ स चानुनीतः प्रणतेन पश्चान् मया महर्षिर्मृदुतामगच्छत्
उष्णत्वमग्न्यातपसंप्रयोगात् शैत्यं हि यत्सा प्रकृतिर्जलस्य ६६ इक्ष्वाकुवंशप्रभवो
यदा ते भेत्स्यत्यजः कुंभमयोमुखेन संयोक्ष्यसे स्वेन वपुर्महिम्ना तदेत्यवोचत्स
तपोनिधिर्मां ६७ संमोचितः सत्ववता त्वयाहं शापाच्चिरप्रार्थितदर्शनेन प्रति
प्रियं चेद्भवतो न कुर्यां वृथा हि मे स्यात्स्वपदोपलब्धिः ६८ गांधर्वमस्त्रं तदितः
प्रतीच्छ: प्रयोगसंहारविभक्तमंत्रं स्वापनं नाम यतः प्रदर्श्य न चारिहिंसा
विजयश्च हस्ते ६९ संमोहनं नाम सखे ममास्त्रं प्रयोगसंहारविभक्तमंत्रं गां
धर्वमादत्स्व यतः प्रयोक्तुर्न चारिहिंसा विजयश्च हस्ते ७० अलं ह्रिया मां
प्रति यन्मुहूर्तं दयापरोऽभूः प्रहरन्नपि त्वं तस्मादुपच्छंदयति प्रयोज्यं म
यि त्वया न प्रतिषेधरौक्ष्यं ७१ तथेत्युपस्पृश्य पयः पवित्रं सोमोद्भवायाः सरि
तो नृसोमः उदङ्मुखः सोऽस्त्रविदस्त्रमंत्रं जग्राह तस्मान्निगृहीतशापात्
७२ एवं तयोरध्वनि दैवयोगादासेदुषोः सख्यमचिंत्यहेतु एको ययौ चैत्ररथप्र

देशान् सौराष्ट्रचरम्यानपरो विदर्भान् १३ तं तस्थिवांसं नगरोपकंठे तदागमारूढगुरु
प्रहर्षः प्रत्युज्जगाम क्रथकैशिकेंद्रश्चंद्रं प्रवृद्धोर्मिरिवोर्मिमाली १४ प्रवेश्य चैनं
पुरमग्रयायी नीचैस्तथोपाचरदर्पितश्रीः मेने यथा तत्र जनः समेतो वैदर्भमागं
तुकमजं गृहेशं १५ तस्याधिकारपुरुषैः प्रणतैः प्रदिष्टां प्राग्द्वारवेदिविनिवेशि
तपूर्णकुंभां रम्यां रघुप्रतिनिधिः स नवोपकार्यं बाल्यात्परामिव दशां मदनो
ऽध्युवास १६ तत्र स्वयंवरसमाहृतराजलोकं कन्याललाम कमनीयमजस्य
लिप्सोः भावावबोधकलुषा दयितेव रात्रौ निद्रा चिरेण नयनाभिमुखी बभूव
१७ तं कर्णभूषणनिपीडितपीवरांसं शय्योत्तरच्छदविमर्दकृशांगरागं वैतालि
का ललितबंधमनोहराणि: प्राबोधयन्नुषसि वाग्भिरुदारवाचः १८ रात्रिर्ग
ता मतिमतां वर मुंच शय्यां धात्रा द्विधैव ननु धूर्जगतो विभक्ता यामेकतस्तव
बिभर्ति गुरुर्विनिद्रस्तस्या भवानपरधुर्यपदावलंबी १९ निद्रावशेन भवता
ऽप्यनवेक्ष्यमाणा पर्युत्सुकत्वमबला निशि खंडितेव लक्ष्मीर्विनोदयति येन दिगंत
लंबी सोऽपि त्वदाननरुचिं विजहाति चंद्रः २० तद्वल्गुना युगपदुन्मिषितेन ता
वत्सद्यः परस्परतुलामधिरोहतां द्वे प्रस्पंदमानपरुषेतरतारमंतश्चक्षुस्त २९

वप्राचलित लमरस्त्वपद्मं ८१ हंतस्य चंद्ररतिविभ्रमनोज्ञदीपां संरुद्ध्यते सरसिजैरस
णां श्रुतिभिः स्वाभाविकं परगुणेन विभातवायुः सौरभ्यमीप्सुरिव ते मुखमारुतस्य ८
२ ताम्रोदरेषु पतितं द्रुमपल्लवेषु निर्धौतहारगुलिकाविशदं हिमांभः आभाति ल
ब्धपरभागतया धरोष्ठे लीलास्मितं सदशनार्चिरिव त्वदीयं ८३ यावत्प्रतापनिधि
राक्रमते न भानुरह्नाय तावदरुणेन तमो निरस्तं आयोधनाग्रसरतां त्वयि वीर
याते किं वा रिपूंस्तव गुरुः स्वयमुच्छिनत्ति ८४ शय्यां जहत्युभयपक्षविनीतनि
द्रा स्तंबेरमा मुखरशृंखलकर्षिणस्ते येषां विभांति तरुणारुणरागयोगाद्भि
न्नाद्रिगैरिकतटा इव दंतकोशाः ८५ दीर्घेष्वमी नियमिताः पटमंडपेषु निद्रां वि
हाय वनजाक्ष वनायुदेश्याः वक्त्रोष्मणा मलिनयंति पुरोगतानि लेह्यानि सैंध
वशिलाशकलानि वाहाः ८६ भवति विरलभक्तिर्म्लानपुष्पोपहारः स्वकिरण
परिवेषोद्भेदशून्याः प्रदीपाः अयमपि च गिरं नस्त्वत्प्रबोधप्रयुक्तामनुवदति शु
कस्ते मंजुवाक्पंजरस्थः ८७ इति विरचितवाग्भिर्बंदिपुत्रैः कुमारः सपदि विग
तनिद्रस्तल्पमुज्झांचकार मदपटु निनदद्भिर्बोधितो राजहंसैः सुरगज इव दंतैः
गांगं सैकतं सुप्रतीकः ८८ अथ विधिमवसाय्य शास्त्रदृष्टं दिवसमुखोचितमं

वितानि पक्ष्मा क्षणलविस्वैताउ द्रुपदेवः क्षितिपसमाजमगात्स्वयंवरस्थं ७६ इ-
तिश्री रघुवंशे महाकाव्ये श्रीकालिदासकृतौ स्वयंवराभिगमनो नाम पंचमः सर्गः
५ ॥ स तत्र मंचेषु विमानकल्पे आकल्पसंभृक्षितिरूपशोभान् सिंहासनस्थान्नृपती
नपश्यद्भूपान् प्रशस्तानिव दैमवेदान १ स तत्र मंचेषु मनोज्ञवेषान् सिंहासनस्था
नुपचारवत्सु वैमानिकानां मरुतामपश्यदाकृष्टलीलान्नरलोकपालान् २ रतेर्गृही
तानुनयेन कामं प्रत्यर्पितस्वांगमिवेश्वरेण काकुत्स्थमालोकयतां नृपाणां
मनो बभूवेंदुमतीनिराशं ३ वैदर्भनिर्दिष्टमसौ कुमारः क्लृप्तेन सोपानपथेन मंचं शि
लाविभंगैर्मृगराजशावः तुंगं नगोत्संगमिवारुरोह ४ परार्ध्यवर्णास्तरणोपपन्नमा
सेदिवान्रत्नवदासनं सः भूयिष्ठमासीदुपमेयकांतिर्मयूरपृष्ठाश्रयिणा गुहेन ५
तासु श्रिया राजपरंपरासु प्रभाविशेषोदयदुर्निरीक्ष्यः सहस्रधात्मा व्यरुचद्विभ
क्तः पयोमुचां पंक्तिषु विद्युतेव ६ तेषां महार्हासनसंस्थितानां मुदारनेपथ्यभृतां स
मध्ये रराज धाम्ना रघुसूनुरेव कल्पद्रुमाणामिव पारिजातः ७ नेत्रव्रजाः पौरज
नस्य तस्मिन् विहाय सर्वान्नृपतीन्निपेतुः मदोत्कटे रेचितपुष्पवृक्षाः गंधद्विपे वन्य
इव द्विरेफाः ८ अथ स्तुते वंदिभिरन्वयज्ञैः सोमार्कवंश्ये नरदेवलोके संचारिते २०

चागुरुसारयोनौ धूपे समुत्सर्पति वैजयंतीः ९ पुरोपकंठोपवनाश्रयाणां शिखं-
डिनामुद्धतनृत्यहेतौ प्रध्मातशंखे परितो दिगंतां स्तूर्यस्वने मूर्च्छति मंगलार्थे १०॥
मनुष्यवाह्यं चतुरस्रयानमध्यास्य कन्या परिवारशोभि विवेश मंचांतरराजमार्गं
पतिंवरा क्लृप्तविवाहवेषा ११ त्रिलोकविशेषकं तस्मिन्विधानातिशये विधातुः क-
न्यामये नेत्रसहस्रलक्ष्ये निपेतुरंतःकरणैर्नरेंद्रा देहैः स्थिताः केवलमासनेषु १२
तां प्रत्यभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः प्रवालशोभा इव पादपानां
शृंगारचेष्टा विविधा बभूवुः १३ कश्चित्कराभ्यामुपगूढनालमालोलपत्राभिहत-
द्विरेफं रजोभिरंतःपरिवेषबंधि लीलारविंदं भ्रमयांचकार १४ विस्रस्तमंसा-
दपरो विलासी रत्नानुविद्धांगदकोटिलग्नं प्रालंबमुत्कृष्य यथावकाशं निनाय
साचीकृतचारुवक्त्रः १५ आकुंचिताग्रांगुलिना ततोऽन्यः किंचित्समावर्जितनेत्रशो-
भः तिर्यग्विसंसर्पिनखप्रभेण पादेन हैमं विलिलेख पीठं १६ निवेश्य वामं भु-
जमासनार्द्धे तत्संनिवेशादधिकोन्नतांसः कश्चिद्विवृत्तत्रिकभिन्नहारः सुहृ-
त्समाभाषणतत्परोऽभूत् १७ विलासिनीविभ्रमदंतपत्रमापांडुरं केतकबर्ह-
मन्यः प्रियानितंबोचितसंनिवेशैर्विपाटयामास युवा नखाग्रैः १८ कुशेशयाता-

मतलेन कश्चित् करेण रेखाध्वजलांछनेन रत्नांगुलीयप्रभयानुविद्धानुदीरयामा
स सलीलमक्षान् १९ कश्चिद्यथाभागमवस्थितेपि स्वसन्निवेशाद्व्यतिलंघिनीव व
ज्रांशुगर्भांगुलिरंध्रमेकं व्यापारयामास करं किरीटे २० ततो नृपाणां श्रुत
वृत्तवंशा पुंवत्प्रगल्भा प्रतिहाररक्षी प्राक्सन्निकर्षं मगधेश्वरस्य नीत्वा कुमा
रीमवदत्सुनंदा २१ असौ शरण्यः शरणागतानामगाधसत्वो मगधप्रतिष्ठः राजा
प्रजारंजनलब्धवर्णः परंतपो नाम यथार्थनामा २२ कामं नृपाः संति सहस्रसं
ख्या राजन्वतीमाहुरनेन भूमिं नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चंद्रम
सैव रात्रिः २३ क्रियाप्रबंधादयमध्वराणामजस्रमाहूतसहस्रनेत्रः शच्या
श्चिरं पांडुकपोललंबान् मंदारशून्यानलकांश्चकार २४ अनेन चेदिच्छसि
गृह्यमाणं पाणिं वरेण्येन कुरु प्रवेशे प्रासादवातायनसंस्थितानां नेत्रोत्सवं पु
ष्पपुरांगनानां २५ एवं तयोक्ते तमवेक्ष्य किंचिद्विस्रंसिदूर्वांकमधूकमाला
ऋजुप्रणामक्रिययैव तन्वी प्रत्यादिदेशैनमभाषमाणा २६ तां सैव वेत्रग्रह
णनियुक्ता राजांतरं राजसुतां निनाय समीरणोत्थेव तरंगलेखा पद्मांतरं मा
नसराजहंसी २७ जुगाद चैनामयमंगनाथः सुरांगनाप्रार्थितयौवनश्रीः वि

नीतस्तमागः किल सूत्रकारैरैंद्रं पदं भूमिगतोपि भुंक्ते २७ अनेन पर्यासयताश्रुबिंदून्मु
क्ताफलस्थूलतमान्स्तनेषु प्रत्यर्पिताः शत्रुविलासिनीनामुन्मुक्तसूत्रेण विनैव हाराः २
८ निसर्गभिन्नास्पदमेकसंस्थमस्मिन्द्वयं श्रीश्च सरस्वती च कांत्या गिरा सूनृतया च
योग्या त्वमेवैक कल्याणि तयोस्तृतीया ३० अथांगराजादवतार्य चक्षुर्याहीति जन्यामव
वदत्कुमारी नासौ न कम्यो न च वेद सम्यग्द्रष्टुं न सा भिन्नरुचिर्हि लोकः ३१ ततः प
रस्ताः प्रभवामहेष्यां नृपं नियुक्ता प्रतिहारभूमौ निदर्शयामास विशेषकांतिमिंदुं नवोत्थान
मिवेंदुमत्यै ३२ अवंतिनाथोयमुदग्रबाहुर्विशालवक्षास्तनुवृत्तमध्यः आरोप्य चक्र
भ्रममुष्णतेजास्त्वष्ट्रेव यत्नोल्लिखितो विभाति ३३ अस्य प्रयाणेषु समग्रशक्तेरग्रेस
रैर्वाजिभिरुत्थितानि कुर्वंति सामंतशिखामणीनां प्रभाप्ररोहास्तमयं रजांसि ३४ धा
असौ महाकालनिकेतनस्य वसन्नदूरे किल चंद्रमौलेः तमिस्रपक्षेपि सह प्रियाभिर्ज्यो
त्स्नावतो निर्विशति प्रदोषान् ३५ अनेन यूना सह पार्थिवेन रंभोरु कच्चिन्मनसो रु
चिस्ते शिप्रातरंगानिलकंपितासु विहर्तुमुद्यानपरंपरासु ३६ तस्मिन्नभिद्योतितबं
धुपद्मे प्रतापसंशोषितशत्रुपंके बबंध सा नोत्तमसौकुमार्या कुमुद्वती भानुमतीव
भावं ३७ तामग्रतस्तामरसांतराभामनूपराजस्य गुणैरनूनाम् विधाय सृष्टिं ललितां

दिशाउ ङ्गीगादन्वयः सुदती सुनिंदा ३८ संग्रामनिर्विष्टसहस्रबाहुरष्टादशद्वीपनिखातयू
पः अनन्यसाधारणराजशब्दो बभूव योगी किल कार्तवीर्यः ३९ अकार्यचिंतासम
कालमेव प्रादुर्भवंश्चापधरः पुरस्तात् अंतःशरीरेष्वपि यः प्रजानां प्रत्यादिदेशावि
नयं विनेता ४० ज्याबंधनिष्पंदभुजेन यस्य विनिःश्वसद्वक्त्रपरंपरेण कारागृहे
निर्जितवासवेन लंकेश्वरेणोषितमाप्रसादात् ४१ तस्यान्वये भूपतिरेष जातः प्र
तीप इत्यागमवृद्धसेवी येन श्रियः संश्रयदोषरूढं स्वभावलोलेत्ययशः प्रमृष्टम्
४२ आयोधने कृष्णगतिं सहायमवाप्य यः क्षत्रियकालरात्रिं धारां शितां रामपर
शुधस्य संभावयत्युत्पलपत्रसारां ४३ अस्यांकलक्ष्मीर्भव दीर्घबाहो माहिष्मती
वप्रनितंबकांचीं प्रासादजालैर्जलवेणिरम्यां रेवां यदि प्रेक्षितुमस्ति कामः ४४
तस्याः प्रकामं प्रियदर्शनोपि न स क्षितीशो रुचये बभूव शरत्प्रमृष्टांबुधरोपरोधः
शशीव पर्याप्तकलो नलिन्याः ४५ सा शूरसेनाधिपतिं सुषेणमुद्दिश्य लोकांतरगीतकी
र्तिम् आचारशुद्धोभयवंशदीपं शुद्धांतरक्ष्या जगदे कुमारी ४६ नीपान्वयः पार्थिव
एष यज्वा गुणैर्यमाश्रित्य परस्परेण सिद्धाश्रमं शांतमिवेत्य सत्वैर्नैसर्गिकोप्युत्ससृ
जे विरोधः ४७ यस्यात्मदेहे नयनाभिरामा कांतिर्हिमांशोरिव संनिविष्टा हर्म्याग्रसंरू २२

ष्ठ चरणांबुजेषु तेजोविबद्धां रिपुमंदिरेषु ४८ यस्यावरोधस्तनचंदनानां प्रक्षालनाद्वारिवि
हारकाले कलिंदकन्या मथुरां गतापि गंगोर्मिसंसक्तजलेव भाति ४९ त्रातेन तार्क्ष्यात्कि
लकालियेन मणिं विसृष्टं यमुनौकसा यः वक्षःस्थलव्यापिरुचं दधानः सकौस्तुभं ह्रे
पयतीव कृष्णं ५० संभाव्य भर्तारममुं युवानं मृदुप्रवालोत्तरपुष्पशय्ये वृंदावने चै
त्ररथादनूने निर्विश्यतां सुंदरि यौवनश्री ५१ अध्यास्य चांभःपृषतोक्षितानि शैलेय
गन्धीनि शिलातलानि कलापिनां प्रावृषि पश्य नृत्यं कांतासु गोवर्द्धनकंदरासु ५२ नृ
पं तमावर्तमनोज्ञनाभिः सा व्यत्यगादन्यवधूर्भवित्री महीधरं मार्गवशादुपेतं स्रोतो
वहा सागरगामिनीव ५३ अथांगदाश्लिष्टभुजं भुजिष्या हेमांगदं नामकलिंगनाथं
आसेदुषीं सादितशत्रुपक्षं बालामबालेंदुमुखीं बभाषे ५४ असौ महेंद्राद्रिसमानसा
रः पतिर्महेंद्रस्य महोदधेश्च यस्य क्षरत्सैन्यगजच्छलेन यात्रासु यातीव पुरो महेंद्रः।
५५ ज्याघातरेखे सुभुजो भुजाभ्यां बिभर्ति यश्चापभृतां पुरोगः रिपुश्रियः सांज
नवाष्पसेके बंदीकृतानामिव पद्धतीद्वे ५६ रणे समित्राणि तया प्रकाशः शराशरं
ज्यानिकषो भुजाभ्यां विस्पष्टलेखौ रिपुविक्रमाप्ते निर्वाणभूयिष्ठविवयो वितर्णि
५७ इमं यमात्मनः सद्मनि सन्निकृष्टो मंद्रध्वनित्याजितयामतूर्यः प्रासादवाता

स्तनद्वयपद्मवीचिः प्रबोधयेत्स्पर्शविपद्ममुखे ५८ अनेन सार्धं विहराम्बुराशेस्तीरेषु ताली
वनमर्मरेषु द्वीपांतरानीतलवंगपुष्पैरपाकृतस्वेदलवा मरुद्भिः ५९ प्रलोभि
ताप्याकृतिलोभनीया विदर्भराजावरजा तयैवं तस्मादपावर्तत दूरकृष्टा नीत्येव ल
क्ष्मीः प्रतिकूलदेवात् ६० अथोरगाख्यस्य पुरस्य नाथं दौवारिकी देवसरूपमेत्य।
इतश्चकोराक्षि विलोकयेति पूर्वानुशिष्टां निजगाद भोज्यां ६१ पांड्योयमंसार्पितलं
बहारः कॢप्तांगरागो हरिचंदनेन आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवा
द्रिराजः ६२ विंध्यस्य संस्तंभयिता महाद्रेर्निःशेषपीतोज्झितसिंधुराजः प्रीत्याश्वमे
धावभृथार्द्रमूर्तेः सौस्नातिको यस्य भवत्यगस्त्यः ६३ अस्त्रं हरादाप्तवता दुरापं।
येनेंद्रलोकावजयाय दृप्तः पुरा जनस्थानविमर्दशंकी संधाय लंकाधिपतिः प्र
तस्थे ६४ अनेन पाणौ विधिवद्गृहीते महाकुलीनेन महीव गुर्वी रत्नानुविद्धार्णवमेख
लाया दिशः सपत्नी भव दक्षिणस्याः ६५ तांबूलवल्लीपरिणद्धपूगास्वेलालतालिं
गितचंदनासु तमालपत्रास्तरणासु रंतुं प्रसीद शश्वन्मलयस्थलीषु ६६ इंदीवरश्या
मतनुर्नृपोसौ त्वं रोचनागौरशरीरयष्टिः अन्योन्यशोभापरिवृद्धये वां योगस्तडित्तोयदयो
रिवास्तु ६७ स्वसुर्विदर्भाधिपतेस्तदीयो लेभेंतरं चेतसि नोपदेशः दिवाकरादर्शनबद्धको १३

त्री नक्षत्रनाथांशुरिवारविंदे ६८ संचारिणीदीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा न
रेंद्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ६९ तस्यां रघोः सूनुरुपस्थितायां
वृणीत मां नेति समाकुलोभूत् वामेतरः संशयमस्य बाहुः केयूरबंधोच्छ्वसितैर्नुनोद
७० तं प्राप्य सर्वावयवानवद्यं व्यावर्तता न्योपगमात्कुमारी न हि प्रफुल्लं सहकारमेत्य
वृक्षांतरं कांक्षति षट्पदाली ७१ तस्मिन्समावेशितचित्तवृत्तिः मिंदुप्रभामिंदुमतीम
वेक्ष्य प्रचक्रमे वक्तुमनुक्रमज्ञा सविस्तरं वाक्यमिदं सुनंदा ७२ इक्ष्वाकुवंश्यः ककु
दं नृपाणां ककुत्स्थ इत्याहितलक्षणोभूत् काकुत्स्थशब्दं यत उन्नतेच्छाः श्लाघ्यं दध
त्युत्तरकोशलेंद्राः ७३ महेंद्रमास्थाय महोक्षरूपं यः संयति प्राप्तपिनाकिलीलः च
कार बाणैरसुरांगनानां गंडस्थलीः प्रोषितपत्रलेखाः ७४ ऐरावतास्फालनविश्लथं
यः संघट्टयन्नंगदमंगदेन उपेयुषः स्वामपि मूर्त्तिमग्र्यां मर्धासनं गोत्रभिदोधितस्थौ ७
५ जातः कुले तस्य किलोरुकीर्त्तिः कुलप्रदीपो नृपतिर्दिलीपः अतिष्ठदेकोनशतक्र
तुत्वे शक्राभ्यसूयाविनिवृत्तये यः ७६ यस्मिन्महीं शासति वाणिनीनां निद्रां विहारा
र्द्धपथे गतानां वातोपि नास्रंसयदंशुकानि को लंबयेदाहरणाय हस्तं ७७ पुत्रो रघु
स्तस्य पदं प्रशास्ति महाक्रतोर्विश्वजितः प्रयोक्ता चतुर्दिगावर्जितसंभृतां यो मृ

सा न शेषामकरोद्दिल्लुतिं आरूढमद्रीनुदधीन्वितीर्णं भुजंगमानां वसतिं प्रविष्टं ऊर्ध्वं गतं य
स्य न चानुबंधि यशः परिच्छेत्तुमियत्तयालम् ७९ असौ कुमारस्तमजोनुजातः त्रिविष्ट
पस्येव पतिं जयंतः गुर्वीं धुरं यो भुवनस्य पित्रा धुर्येण दम्यः सदृशीं बिभर्ति ८०॥
कुलेन कांत्या वयसा नवेन गुणैश्च तैस्तैर्विनयप्रधानैः त्वमात्मनस्तुल्यममुं वृणीष्व र
त्नं समागच्छतु कांचनेन ८१ ततः सुनंदावचनावसाने लज्जां तनूकृत्य नरेंद्रकन्या॥
दृष्ट्या प्रसादामलया कुमारं प्रत्यग्रहीत्संवरणस्रजेव ८२ सा यूनि तस्मिन्नभिलाषबंध
शशाक शालीनतया न वक्तुं रोमांचलक्ष्येण स गात्रयष्टिं भित्त्वा निराक्रामदरालकेश्या
ः ८३॥ तथागतायां परिहासपूर्वं सख्यां सखी वेत्रधरा बभाषे आर्ये व्रजामोन्यत इ
त्यथैनां वधूरसूयाकुटिलं ददर्श ८४ सा चूर्णगौरं रघुनंदनस्य धात्रीकराभ्यां करभोप
मोरूः आसंजयामास यथाप्रदेशं कंठे गुणं मूर्तमिवानुरागम् ८५ तया स्रजा मंगलपु
ष्पमय्या विशालवक्षःस्थललंबया सः अमंस्त कंठार्पितबाहुपाशां विदर्भराजावर
जां वरेण्यः ८६ ॥शशिनमुपगतेयं कौमुदी मेघमुक्तं जलनिधिमनुरूपं जह्नुकन्याव
तीर्णा इति समगुणयोगप्रीतयस्तत्र पौराः श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ८७ २४
प्रमुदितवरपक्षमेकतस्तत्क्षितिपतिमंडलमन्यतो वितानम् उषसि सर इव प्रफुल्लपद्मं

कुमुदवनमतिनिद्रमासीत् ८८ इतिश्रीरघुवंशेमहाकाव्येकालिदासकृतौस्वयंवर
वर्णनोनामषष्ठःसर्गः ६। ८८०॥ अथोपयंत्रासदृशेनयुक्तंस्कंदेनसाक्षादिवदे
वसेनाम् स्वसारमादायविदर्भनाथः पुरःप्रवेशाभिमुखोबभूव १ सेनानिवेशा
न्पृथिवीक्षितोपि जग्मुर्विभातग्रहमंदभासः भोज्यांप्रतिव्यर्थमनोरथत्वाद्रूपे
षुवेषेषुचसाभ्यसूयाः २ सान्निध्ययोगात्किलतत्रशच्याः स्वयंवरक्षोभकृताम
भावः काकुत्स्थमुद्दिश्यसमत्सरोपि शशामतेनक्षितिपाललोकः ३ तावत्प्रकी
र्णाभिनवोपचारमिंद्रायुधद्योततोरणांकं वरःसवध्वासहराजमार्गंप्रापध्वजच्छ
ायनिवारितोष्णम् ४ ततस्तदालोकनतत्पराणां सौधेषुचामीकरजालवत्सु
बभूवुरित्थंपुरसुंदरीणां त्यक्तान्यकार्याणिविचेष्टितानि ५ आलोकमार्गंसहसा
व्रजंत्याकयाचिदुद्वेष्टनवांतमाल्यः बद्धुंनसंभावितएवतावत्करेणरुद्धोपि
चकेशपाशः ६ प्रसाधिकालंबितमग्रपादमाक्षिप्यकाचिद्द्रवरागमेव उत्सृष्ट
लीलागतिरागवाक्षादलक्तकांकांपदवींततान ७ विलोचनंदक्षिणमंजनेनसं
भाव्यतद्वंचितवामनेत्रा तथैववातायनसन्निकर्षंययौशलाकामपरावहंती
८ जालांतरप्रेषितदृष्टिरन्याप्रस्थानभिन्नांनबबंधनीवीं नाभिप्रविष्टाभरणप्र

रघुवंश सप्तम
२५

भेण हस्तेन तस्थाववलंब्य वासः ९। अर्धांचिता सत्वरमुच्छितायाः पदे २ दुर्निमिते गल
ती कस्याश्चिदासीद्रसना तदानीमंगुष्ठमूलार्पितसूत्रशेषा १०। तासां मुखैरासवगंध
गर्भैर्व्याप्तांतराः सांद्रकुतूहलानां विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्राभरणा इ
वासन् ११ ता राघवं दृष्टिभिरापिबंत्यो नार्यो न जग्मुर्विषयांतराणि तथा हि शेषें
द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा १२ स्थाने वृता भूपतिभिः परोक्षैः स्वयं
वरं साधुममंस्त भोज्या पद्मेव नारायणमन्यथासौ लभेत कांतं कथमात्मतुल्यम्।
१३ परस्परेण स्पृहणीयशोभं न चेदिदं द्वंद्वमयोजयिष्यत् अस्मिन्द्वये रूपवि
धानयत्नः पत्युः प्रजानां वितथोऽभविष्यत् १४ रतिस्मरौ नूनमिमावभूतां राज्ञां
सहस्रेषु तथा हि बाला गतेयमात्मप्रतिरूपमेनं मनो हि जन्मांतरसंगतिज्ञं १५।
इत्युद्गताः पौरवधूमुखेभ्यः शृण्वन्कथाः श्रोत्रसुखाः कुमारः उद्भासितं मंगलसंवि
धाभिः संबंधिनः सद्म समाससाद १६ ततोवतीर्याशु करेणुकायाः स कामरूपेश्वर
दत्तहस्तः वैदर्भनिर्दिष्टमथो विवेश नारीमनांसीव चतुष्कमंतः १७ महार्हसिंहासन २५
संस्थितोसौ सरत्नमर्घ्यं मधुमच्च गव्यं भोजोपनीतं च दुकूलयुग्मं जग्राह सार्धं वनिताक
टाक्षैः १८ दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधरक्षैः वेलासकाशं स्फुटफे

नराङ्गि नवैरुकृत्वानि क्वंजपादैः १८ तत्रार्चितो भोजपतेः पुरोधाः हुत्वाग्निमाज्यादिभि
रग्निकल्पः तमेव चाधाय विवाहसाक्ष्ये वधूवरौ संगमयांचकार २० हस्तेन हस्तं परिगृह्य
वध्वाः सराजसूनुः सुतरां चकासे अनंतराशोकलताप्रवालं प्राप्येव चूतः प्रतिपल्लवेन
२१ आसीद्वरः कंटकितप्रकोष्ठः स्विन्नांगुलिः संववृते कुमारी वृत्तिस्तयोः पाणिसमागमे
न समं विभक्तेव मनोभवस्य २२ तयोरपांगप्रतिचारितानि क्रियासमापत्तिनिवर्त्तितानि ह्री
यंत्रणामानशिरे मनोज्ञामन्योन्यलोलानि विलोचनानि २३ प्रदक्षिणप्रक्रमणात्कृशा
नोरुदर्चिषस्तन्मिथुनं चकासे मेरोरुपांतेष्विव वर्त्तमानमन्योन्यसंसक्तमहस्त्रियामम्।
२४ नितंबगुर्वी गुरुणा प्रयुक्ता वधूर्विधातृप्रतिमेन तेन चकार सा मत्तचकोरनेत्रा लज्जा
वती लाजविसर्गमग्नौ २५ हविःशमीपल्लवलाजगंधिः पुण्यः कृशानोरुदियाय धूमः
कपोलसंसर्पिशिखः स तस्या मुहूर्त्तकर्णोत्पलतां प्रपेदे २६ तदंजनक्लेदसमाकुलाक्षं
प्रम्लानबीजांकुरकर्णपूरं वधूमुखं पाटलगंडलेखमाचारधूमग्रहणाद्बभूव २७ तौ स्ना
तकैर्बंधुमता च राज्ञा पुरंध्रिभिश्च क्रमशः प्रयुक्तं कन्याकुमारौ कनकासनस्थावार्द्राक्ष
तारोपणमन्वभूताम् २८ इति स्वसुर्भोजकुलप्रदीपः संपाद्य पाणिग्रहणं स राजा महीपती
नां पृथगर्हणार्थं समादिदेशाधिकृतानधिश्रीः २९ लिंगैर्मुदः संवृतविक्रियास्ते ह्रदा

ःप्रसन्नाइवगूढनक्राः वैदर्भमामंत्र्ययथुस्तदीयां प्रत्यर्प्यपूजामुपदाच्छलेन २० सराज
लोकः कृतपूर्वसंविदारंभसिद्धौ समयोपलभ्यम् आदास्यमानः प्रमदामिषं तद्यावरस्य
पंक्तिनमज्जस्यतस्थौ २१ तथेतिपितादुक्रथकैशिकानामनुष्ठितानंतरजाविवाहः
सत्वानुरूपाहरणीकृतश्रीः प्रास्थापयद्राघवमन्वगाच्च २२ तिस्रस्त्रिलोकप्रथितेनसा
र्द्धं मज्जेनमार्गेवसतीरुषित्वा तस्मादपावर्त्तत कुंडिनेशः पर्वात्ययेसोमइवोष्णर
श्मेः २३ प्रमन्यवः प्रागपिकोसलेंद्रे प्रत्येकमात्तस्वतयाबभूवुः अतोनृपाश्चक्षमि
रेसमेताः स्त्रीरत्नलाभंनतदात्मजस्य २४ तमुद्वहंतंपथिभोजकन्यां रुरोधरा
जन्यगणः सदृप्तः बलिप्रदिष्टांश्रियमाददानं त्रैविक्रमंपादमिवेंद्रशत्रुः २५ तस्याः
सरक्षार्थमनल्पयोधमादिश्यपित्र्यंसचिवंकुमारः प्रत्यग्रहीत्पार्थिववाहिनीतांभा
गीरथींशोणइवोत्तरंगः २६ पत्तिःपदातिंरथिनंरथेशस्तुरंगसादीतुरगाधिरूढम्
यंताग‍जस्याभ्यपतद्गजस्थं तुल्यप्रतिद्वंद्विबभूवयुद्धम् नदत्सुतूर्येष्वविभाव्यवा
चो नोदीरयंतिस्मकुलोपदेशान् बाणाक्षरैरेवपरस्परस्य नामोर्जितंचापभृतःश
शंसुः २७ उत्थापितःसंयतिरेणुरश्वैः सांद्रीकृतःस्यंदनवंशचक्रैः विस्तारितःकुंजरकर्णता
लैर्नेत्रक्रमेणोपरुरोधसूर्यं २८ मत्स्यध्वजावायुवशाद्विदीर्णैर्मुखैःप्रवृद्धध्वजिनीरजांसिब

शुः पिबंतः परमार्थमत्स्याः पर्याविलानीव नवोदकानि रथो रथांगध्वनिना विजज्ञे विलोलघं
टाक्वणितेन नागः स्वभर्तृनामग्रहणाद्बभूव सांद्रे रजस्यात्मपरावबोधः ४१ आवृण्वतो लो
चनमार्गमाजौ रजोंधकारस्य विजृंभितस्य शस्त्रक्षताश्वद्विपवीरजन्मा बालारुणोऽभूद्रु
धिरप्रवाहः ४२ सच्छिन्नमूलः क्षतजेन रेणुः तस्योपरिष्टात्पवनावधूतः अंगारशेषस्य
हुताशनस्य पूर्वोत्थितो धूमइवाबभासे ४३ प्रहारमूर्छापगमे रथस्था यंतॄनुपालभ्य
निवर्तिताश्वान् यैः सादिता लक्षितपूर्वकेतूंस्तानेव सामर्षतया निजघ्नुः ४४ अप्य
र्धमार्गे परबाणलूना धनुर्भृतां हस्तवतां पृषत्काः संप्रापुरेवात्मजवानुवृत्त्या पूर्वार्धभागैः
फलिभिः शरव्यम् ४५ आधोरणानां गजसन्निपाते शिरांसि चक्रैर्निशितैः क्षुराग्रैः हृता
न्यपि श्येननखाग्रकोटिव्यासक्तकेशानि चिरेण पेतुः ४६ पूर्वं प्रहर्ता न जघान भूयः
प्रतिप्रहाराक्षममश्वसादी तुरंगमस्कंधनिषण्णदेहं प्रत्याश्वसंतं रिपुमाचकांक्ष ४७ ॥
तनुत्यजां वर्मभृतां विकोशैर्बृहत्सु दंतेष्वसिभिः पतद्भिः उद्यंतमग्निं शमयांबभूवुर्गजा
विविग्नाः करसीकरेण ४८ शिलीमुखोत्कृत्तशिरःफलाढ्या च्युतैः शिरस्त्रैश्चषकोत्तरे
व रणक्षितिः शोणितमद्यकुल्या रराज मृत्योरिव पानभूमिः ४९ उपांतयोर्निष्कुषितं वि
हंगैः राक्षिप्य तेभ्यः पिशितप्रियापि केयूरकोटिक्षततालुदेशा शिवा भुजच्छेदमपाचका

रा७५० कश्चिद्द्विषत्खड्गहृतोत्तमांगः सद्यो विमानप्रभुतामुपेत्य वामांगसंसक्तसुरांगः स्वं
नृत्यत्कबंधं समरे ददर्श ५१ अन्योन्यसूतोन्मथनादभूतां तावेव सूतौ रथिनौ च कौचि
त् व्यश्वौ गदाव्यायतसंप्रहारौ भग्नायुधौ बाहुविमर्दनिष्ठौ ५२ परस्परेण क्षतयोः प्र
हर्त्रोरुत्क्रांतवाय्वोः समकालमेव अमर्त्यभावेपि कयोश्चिदासीदेकाप्सरः प्रार्थित
योर्विवादः ५३ व्यूहावुभौ तावितरेतरस्माद्भंगं जयं चापतुरव्यवस्थम् पश्चात्पुरो
मारुतयोः प्रवृद्धौ पर्यायवृत्त्येव महार्णवोर्मी ५४ परेण भग्नेपि बले महौजाः यया
वजः प्रत्यरिसैन्यमेव धूमो निवर्त्येत समीरणेन यतो हि कक्षस्तत एव वह्निः ५५ रथी
निषंगी कवची धनुष्मान् दृप्तः स राजन्यकमेकवीरः निवारयामास महावराहः क
ल्पक्षयोद्वृत्तमिवार्णवांभः ५६ स दक्षिणं तूणमुखेन वामं व्यापारयन् हस्तमलक्ष्य
ताजौ आकर्णकृष्टा सकृदस्य योद्धुर्मौर्वीव बाणान् सुषुवे रिपुघ्नान् ५७ स रोषद
ष्टाधरलोहितोष्ठैर्व्यक्तोर्ध्वरेखा भ्रुकुटीर्वहद्भिः तस्तार गां भल्लनिकृत्तकंठैर्हुंका
रगर्भैर्द्विषतां शिरोभिः ५८ सर्वैर्बलांगैर्द्विरदप्रधानैः सर्वायुधैः कंकटभेदिभिश्च स
र्वप्रयत्नेन च भूमिपालाः तस्मिन् प्रजह्रुर्युधि सर्व एव ५९ सोस्त्रव्रजैश्छन्नरथः प
रेषां ध्वजाग्रमात्रेण बभूव लक्ष्यः नीहारमग्नो दिनपूर्वभागः किंचित्प्रकाशेन वि

तया विषयेषु विनाशधर्मसु त्रिदिवस्थेष्वपि निःस्पृहोऽभवत् १० गुणवत्सुतरोपितश्रियः
परिणामे हि दिलीपवंशजाः पदवीं तरुवल्कवाससां प्रयताः संयमिनां प्रपेदिरे ११ तमर
ण्यसमाश्रयोन्मुखं शिरसा वेष्टनशोभिना सुतः पितरं प्रणिपत्य पादयोरपरित्यागमया
चतात्मनः १२ रघुरश्रुमुखस्य तस्य तत् कृतवानीप्सितमात्मजप्रियः न तु सर्प इ
व त्वचं पुनः प्रतिपेदे व्यपवर्जितां श्रियम् १३ स किलाश्रममन्त्यमाश्रितो निवसन्नाव
सथे पुराद्बहिः समुपास्यत पुत्रभोग्यया स्नुषयेवाविकृतेन्द्रियः श्रिया १४ प्रशमस्थित
पूर्वपार्थिवं कुलमभ्युद्यतनूतनेश्वरं नभसा निभृतेन्दुना तुलामुदितार्केण समारुरो
ह तत् १५ यतिपार्थिवलिंगधारिणौ ददृशाते रघुराघवौ जनैः अपवर्गमहोदयार्थ
योर्भुवमंशाविव धर्मयोर्गतौ १६ अजिताधिगमाय मन्त्रिभिर्युयुजे नीतिविशार
दैरजः अनपायिपदोपलब्धये रघुराप्तैः समियाय योगिभिः १७ समं नृपतिर्युवा स रघुडतन्
सचिवैः प्रत्यहमर्थसिद्धये अपुनर्जन्मनोपपत्तये प्रवयाः संयमिभिर्मनीषिभिः १८
अनयत्प्रभुशक्तिसंपदा वशमेको नृपतीननन्तरान् अपरः प्रणिधानयोग्यया मरु
तः पंचशरीरगोचरान् १९ नयचक्षुरजो दिदृक्षया पररंध्रस्य ततान मंडले हृदये सम
रोपयन्मनः परमं ज्योतिरवेक्षितुं रघुः २० अकरोदचिरेश्वरः क्षितौ द्विषदारंभफलानि से

समासात् इतरोदहनेस्वकर्मणां ववृते ज्ञानमयेन वह्निना २१ नृपतिः प्रकृतीरवेक्षितुं
व्यवहारासनमाददे युवा परिचेतुमुपांशुधारणां कुशपूतं प्रवयास्तु विष्टरम् २२ प
णबंधमुखान् गुणानजः षडुपायुक्त समीक्ष्य तत्फलम् रघुरप्यजयद्गुणत्रयं प्रकृति
स्थं समलोष्टकांचनः २३ न नवः प्रभुराफलोदयात् स्थिरकर्मा विरराम कर्मणः न च
योगविधेर्नवेतरः स्थिरधीरा परमात्मदर्शनात् २४ इति शत्रुषु चेंद्रियेषु च प्रतिषिद्धप्रस
रेषु जाग्रतौ प्रसितावुदयापवर्गयोः उभयीं सिद्धिमुभाववापतुः २५ अथ काश्चिद
जव्यपेक्षया गमयित्वा समदर्शनः समाः तमसः परमापदव्ययं पुरुषं योगसमाधि
ना रघुः २६ श्रुतदेहविसर्जनः करोत् स तदौर्ध्वदेहिकं पितृभक्त्या पितृकार्य
कल्पवित् न हि तेन पथा तनुत्यजस्तनयावर्जितपिंडकांक्षिणः २७ स परार्ध्यग
ते रशोच्यतां पितुरुद्दिश्य सदर्थवेदिभिः शमिताधिरधिज्यकार्मुकः कृतवानप्रति
शासनं जगत् २८ क्षितिरिंदुमती च भामिनी पतिमासाद्य तमग्र्यपौरुषम् प्रथमा
स्वविश्रुतम् दशपूर्वरथं यमाख्यया दशकंठारिगुरुं विदुर्बुधाः २९ ऋषिदेवग
णस्वधाभुजां श्रुतयागप्रसवैः स पार्थिवः अनृणत्वमुपेयिवान् बभौ परिधेर्मुक्त
इवोष्णदीधितिः ३० बलमार्तभयोपशांतये विदुषां सत्कृतये बहुश्रुतं वसु तस्य वि

रक्षितेव ६० प्रियंवदात्प्राप्तमथ प्रियार्हः प्रायुङ्क्त राजस्वधिराजसूनुः गान्धर्वमस्त्रं कुसुमास्त्रकान्तः प्र
स्वापनं स्वप्ननिवृत्तलौल्यः ६१ ततो धनुःकर्षणमूढहस्तमेकांसपर्यस्तशिरस्त्रजालम्।
तस्थौ ध्वजस्तम्भनिषण्णदेहं निद्राविधेयं नरदेवसैन्यम् ६२ ततः प्रियोपात्तरसेऽधरोष्ठे।
निवेश्य दध्मौ जलजं कुमारः तेन स्वहस्तार्जितमेकवीरः पिबन्यशो मूर्तमिवाबभा
से ६३ शङ्खस्वनाभिज्ञतया निवृत्तास्तं सन्नशत्रुं ददृशुः स्वयोधाः निमीलितानामिव
पङ्कजानां मध्ये स्फुरन्तं प्रतिमाशशाङ्कम् ६४ सशोणितैस्तेन शिलीमुखाग्रैर्निक्षेपिताः
केतुषु पार्थिवानाम् यशो हृतं संप्रति राघवेण न जीवितं वः कृपयेति वर्णाः ६५ स चाप
कोटीनिहितैकबाहुः शिरस्त्रनिष्कर्षणभिन्नमौलिः ललाटबद्धश्रमवारिबिन्दुर्भीतां प्रि
यामेत्य वचो बभाषे ६६ इतः परानर्भकहार्यशस्त्रान्वैदर्भि पश्यानुमता मयासि एवं
विधेनाहवचेष्टितेन त्वं प्रार्थ्यसे हस्तगता ममैभिः ६७ तस्याः प्रतिद्वन्द्विभवाद्विषादात्सद्यो।
विमुक्तं मुखमाबभासे निःश्वासबाष्पापगमात्प्रपन्नः प्रसादमात्मीयमिवात्मदर्शः ६८
हृष्टापि सा ह्रीविजिता न साक्षाद्वाग्भिः सखीनां प्रियमभ्यनन्दत् स्थली नवाम्भःपृषताभि
वृष्टा मयूरकेकाभिरिवाभ्रवृन्दम् ६९ इति शिरसि स वामं पादमाधाय राज्ञामुदवह
दनवद्यां तामवद्यादपेतः रथतुरगरजोभिस्तस्य रूक्षालकाग्रा समरविजयलक्ष्मीः सैव

ध्मीरलत्वा ७० प्रथमपरिगतार्थस्तं रघुः संनिवृत्तं न हि सति कुलधुर्ये सूर्यवंश्या गृहाय ७१ इति
२५ श्रीरघुवंशे महाकाव्ये कालिदासकृतौ स्त्रीरत्नलाभो नाम सप्तमः सर्गः ७ ॥ श्री
॥ अथ तस्य विवाहकौतुकं ललितं बिभ्रत एव पार्थिवः वसुधामपि हस्तगामिनीम
करोदिंदुमतीमिवापराम् १ दुरितैरपि कर्तुमात्मसात्प्रयतन्ते नृपसूनवो हि यत् तदुप
स्थितमग्रहीदजः पितुराज्ञेति न भोगतृष्णया २ अनुभूय वसिष्ठसंभृतैः सलिलै
स्तेन सहाभिषेचनम् विशदोच्छ्वसितेन मेदिनी कथयामास कृतार्थतामिव ३ स बभूव दु
रासदः परैः गुरुणाथर्वविदा कृतक्रियः पवनाग्निः समागमो ह्ययं सहितं ब्रह्म यदस्त्र
तेजसा ४ रघुमेव निवृत्तयौवनं तममन्यन्त नरेश्वरं प्रजाः स हि तस्य न केवलां श्रियं
प्रतिपेदे सकलान्गुणानपि ५ अधिकं शुशुभे शुभंयुना द्वितयेन द्वयमेव संगतं
पदमृद्धमजेन पैतृकं विनयेनास्य नवं च यौवनम् ६ सदयं बुभुजे महाभुजः सह
सोद्वेगमियं व्रजेदिति अचिरोपनतां स मेदिनीं नवपाणिग्रहणां वधूमिव ७ अहमेव म
तो महीपतेरिति सर्वः प्रकृतिष्वचिंतयत् उदधेरिव निम्नगाशतेष्वभवन्नास्य विमा
नना क्वचित् ८ न खरो न च भूयसा मृदुः पवमानः पृथिवीरुहानिव स पुरस्कृतमध्यम २६
क्रमो नमयामास नृपाननुद्धरन् ९ अथ वीक्ष्य रघुः प्रतिष्ठितं प्रकृतिष्वात्मजमात्म

द्विसोर्निक्षिप्तवत्वं गुणवत्सुताप्रियरञ्जयोजनम् ३३ स कदाचिदवेक्षितप्रजः नगरोपवने
शचीसखो मरुतां पालयितेव नंदने ३४ अथ रोधसि दक्षिणोदधेः श्रितगोकर्णनिके
तमीश्वरं उपवीणयितुं ययौ रवेरुदयावृत्तिपथेन नारदः ३५ कुसुमैर्ग्रथितामपार्थिवैः स्र
जमातोद्यशिरोनिवेशिताम् अहरत्किल तस्य वेगवानधिवासस्पृहयेव मारुतः ३६ भ्र
मरैः कुसुमानुसारिभिः परिकीर्णा परिवादिनी मुनेः ददृशे पवनावलेपजं सृजती बा
ष्पमिवाञ्जनाविलम् ३७ अभिभूय विभूतिमार्तवीं मधुगंधातिशयेन वीरुधाम् नृपस
ङ्गत सा महीपते दयितोरःस्थलरत्नकोटिषु क्षणमात्रसखी सुजातयोः स्तनयोस्ताम
वलोक्य विह्वलाऽपुनरप्यतिबाधलज्जये निमिमीलक्षितिपालसुंदरी ३८ सममेवन
राधिपेन सा गुरुसंमोहविलुप्तचेतना अगमत्सह तैलबिंदुना नवदीपार्चिरिव क्षितेस्त
लम् ४० उभयोः परिपार्श्ववर्तिनां तुमुलेनार्तरवेण वेजिताः विहगाः कमलाकराश्रियः
समदुःखा इव तत्र चुक्रुशुः ४१ नृपतेर्व्यजनादिभिस्तमो नुनुदे सा तु तथैव संस्थिता प्र
तिकारविधानमायुषः सति शेषे हि फलाय कल्पते ४२ प्रतियोजयितव्यवल्लकी
समवस्थामथ सत्वविप्लवात् स निनाय नितान्तवत्सलः परिगृह्य चितमंकमंगनाम् ४३ प
तिरंकनिषण्णया तया करणापायविभिन्नवर्णया समलक्ष्यत बिभ्रदाविलां मृगलेखामु

त्वसीत्यवेहि माः ४४ विललाप स वाष्पगद्गदं सहजामप्यपहाय धीरताम् अभितप्तमयोपि
मार्दवं भजते कैव कथा शरीरिषु ४५ कुसुमान्यपि गात्रसंगमात् प्रभवन्त्यायुरपोहि-
तुं यदि न भविष्यति हन्त साधनं किमिवान्यत्प्रहरिष्यतो विधेः ४६ अथवा मम भाग्य-
विप्लवात् अशनिः कल्पित एव वेधसा यदनेन न पातितस्तरुः क्षपिता तद्विटपाश्रिता
लता ४७ अथवा मृदु वस्तु हिंसितुं मृदुनैवारभते प्रजान्तकः हिमसेकविपत्तिरत्र मे
नलिनी पूर्वनिदर्शनं मता ४८ स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति
मां विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ४९ कृतवत्यसि नावधीरणा-
मपराद्धेपि यदा चिरं मयि कथमेकपदे निरागसं जनमाभाष्यमिमं न मन्यसे ५०
ध्रुवमस्मि शठः शुचिस्मिते विदितः कैतववत्सलस्तव परलोकमसन्निवृत्तये यदना-
पृच्छ्य गतासि मामितः ५१ दयितां यदि तावदन्वगाद्विनिवृत्तं किमिदं तया विना सहतां
हतजीवितं मम प्रबलामात्मकृतां वेदनाम् ५२ सुरतश्रमसंभृतो मुखे ध्रियते स्वेद-
लवोद्गमोपि ते अथ चास्तमिता त्वमात्मना धिगिमां देहभृतामसारताम् ५३ इदमुच्छ्वसि-
तालकं मुखं तव विश्रान्तकथं दुनोति माम् निशि सुप्तमिवैकपंकजं विरताभ्यन्तरषट्प-
दस्वनम् ५४ तदपोहितुमर्हसि प्रिये प्रतिबोधेन विषादमाशु मे ज्वलितेन गुहागतं तम-

मा स्म दुहिनार्दिखिन्नकमोषधिः ५५ मनसापि न विप्रियं मया कृतपूर्वं तव किं जहासि मां ननु शा
ब्दपतिः क्षितेरहं त्वयि मे तावनिबंधना रतिः कुसुमोत्कचिताननं तरंगितान् श्रुतयन् त्वं
रुचस्तवालकान् करवीरु करोति मारुतः त्वदुपावर्तनशंकि मे मनः ५७ शासिने तु नरेति शा
ङ्करी दयिताहं क्वचरंपततिणाम् इति ते विरहांतरक्षमो कथमस्तंगतान मामृते: ५८ नवप
ल्लवसंस्तरेपि ते मृदु दूयेत यदंगमर्पितम् तदिदं विषहिष्यते कथं वद वामोरु चिताधिरोह
णम् ५९ इयमप्रतिबोधशायिनी रसना त्वां प्रथमा रहः सखी गतिविभ्रमसादनीरवा नशु
चानानु मृतेव लक्ष्यते ६० कलमन्यभृतासु भाषितं कलहंसीषु मदालसं पृषतीषु
विलोलमीक्षितं पवनोद्धूतलतासु विभ्रमाः ६१ त्रिदिवोत्सुकयाप्यवेक्ष्य मां निहिता
सत्यममी गुणास्त्वया विरहे तव मे गुरुव्यथं हृदयं न त्ववलंबितुं क्षमाः ६२ मिथुनं परि
कल्पितं त्वया सहकारः फलिनी च नन्विमौ अविधाय विवाहसत्क्रियामनयोर्गम्यत इत्यसांप्र
तम् ६३ कुसुमं कृतदोहदस्त्वया यदशोकोयमुदीरयिष्यति अलकाभरणं कथं नु त
त्तव नेष्यामि निवापमाल्यताम् ६४ स्मरतेव सशब्दनूपुरं चरणानुग्रहमन्यदुर्लभं अमुना कु
सुमाश्रुवर्षिणा त्वमशोकेन सुगात्रि शोच्यसे ६५ तव निःश्वसितानुकारिभिर्बकुलैरर्धचि
तां समं मया असमाप्य विलासमेखलां किमिदं किन्नरकंठि सुप्यते ६६ समदुःखसुखः
ख

सखीजनः प्रतिपच्चंद्रनिभोयमात्मजः अहमेकरसस्तथापि ते व्यवसायः प्रतिपत्तिनिष्ठुरः
६७ धृतिरस्तमिता रतिश्च्युता विरतं गेयमृतुर्निरुत्सवः गतमाभरणप्रयोजनं परिशून्यं शय
नीयमद्य मे ६८ गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ करुणावि
मुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ६९ मदिराक्षि मदाननार्पितं मधु पीत्वा रसव
त्कथं नु मे अनुपास्यसि बाष्पदूषितं परलोकोपनतं जलांजलिम् ७० विभवेपि सति
त्वया विना सुखमेतावदजस्य गण्यताम् अहृतस्य विलोभनांतरे मम सर्वे विषयास्त्व
दाश्रयाः ७१ विलपन्निति कोशलाधिपः करुणार्थग्रथितं प्रियां प्रति अकरोत्पृथि
वीरुहानपि स्रुतशाखारसबाष्पदूषितान् ७२ अथ तस्य कथंचिदंकतः स्वज
नस्तामपनीय सुंदरीं विससर्ज तदंत्यमंडनामनलायागुरुचंदनैधसे ७३ प्रमदा
मनु संस्थितः शुचा नृपतिः सन्निति वाच्यदर्शनात् न चकार शरीरमग्निसात् सहदे
व्या न तु जीविताशया ७४ अथ तेन दशाहतः परं गुणशेषामुपदिश्य भामिनीम् वि
दुषा विधयः समापिताः पुर एवोपवने महर्द्धयः ७५ स विवेश पुरीं तया विना क्षण
दापायशशांकदर्शनः परिवाहमिवावलोकयन् स्वशुचः पौरवधूमुखाश्रुषु ७६ ३१
अथ तं सवनाय दीक्षितः प्रणिधानाद्गुरुराश्रमाश्रितः अभिषंगजडं विजज्ञिवा

स्तव विद्वानपि शोककारणम् न भवंतमुपस्थितः स्वयं प्रकृतौ स्थापयितुं पथश्च्युतिः ७८। मयि तेस्य २

निति शिष्येण किलान्वबोधयत् ७७ असमाप्तविधिर्यतो मुने तस्य सुवृत्त वर्तते लघु
संदेशपदा सरस्वती शृणु विश्रुतसत्त्वसार तां हृदि चैनामुपधातुमर्हसि ७९
पुरुषस्य पदेष्वजन्मनः समतीतं च भवच्च भावि च स हि निःप्रतिघेन चक्षुषा त्रितयं
ज्ञानमयेन पश्यति ८० चरतः किल दुश्चरं तपः तृणबिन्दोः परिशङ्कितः पुरा प्रजि
घाय समाधिभेदिनीं हरिरस्मै हरिणीं सुराङ्गनाम् ८१ स तपः प्रतिघातमन्युना
प्रमुखाविःकृतचारुविभ्रमाम् अशपद्भव मानुषीति तां शमवेलाप्रलयोर्मिणा भु
वि ८२ भगवन्परवानयं जनः प्रतिकूलाचरितं क्षमस्व मे इति चोपनतां क्षितिस्पृशं
कृतवानासुरपुष्पदर्शनात् ८३ अथ क्रथकैशिकवंशसंभवा तव भूत्वा महिषी चिर
य सा उपलब्धवती दिवश्च्युतं विवशा शापनिवृत्तिकारणम् ८४ तदलं तदपा
यचिन्तया विपदुत्पत्तिमतामुपस्थिता वसुधेयमवेक्ष्यतां त्वया वसुमत्या हि नृपाः
कलत्रिणः ८५ उदये मदवाच्यमुज्झता श्रुतमाविष्कृतमात्मवत्त्वया मनसस्त
दुपस्थिते ज्वरे पुनरक्लीबतया प्रकाश्यताम् ८६ रुदता कुत एव सा पुनः भवता
नानुमृतापि लभ्यते परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम् ८७
मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः क्षणमप्यवतिष्ठते श्वसन्

यदिदं त्वदृते लतानवानसौ ॥ ८८ ॥ अपशोकमनाः कुटुंबिनीमनुगृह्णीष्व निवापदत्तिभिः स्व
जनाश्रु किलातिसंततं दहति प्रेतमिति प्रचक्षते ॥ ८९ ॥ अवगच्छति मूढचेतनः प्रि
यनाशं हृदि शल्यमर्पितं स्थिरधीस्तु तदेव मन्यते कुशलद्वारतया समुद्धृतम् ॥ ९
०॥ स्वशरीरशरीरिणावपि स्मृतसंयोगविपर्ययौ यदि विरहः किमिवानुता
पयेत् वद बाह्यैर्विषयैर्विपश्चितम् ॥ ९१ ॥ न पृथग्जनवच्छुचो वशं वशिनामु
त्तम गंतुमर्हसि द्रुमसानुमतां किमंतरं यदि वायौ द्वितयेपि ते चलाः ॥ ९२ ॥ स
तथेति विनेतुरुदारमतेः प्रतिगृह्य वचो विससर्ज मुनिम् तदलब्धपदं हृदि शोकघ
ने प्रतियातमिवांतिकमस्य गुरोः ॥ ९३ ॥ तेनाष्टौ परिगमिताः समाः कथंचिद्बालत्वा
दवितथसूनृतेन सूनोः सादृश्यप्रतिकृतिदर्शनैः प्रियायाः स्वप्नेषु क्षणिक
समागमोत्सवैश्च ॥ ९४ ॥ तस्य प्रसह्य हृदयं किल शोकशंकुः प्लक्षप्ररोह इव सौ
धतलं बिभेद प्राणांतहेतुमपि तं भिषजामसाध्यं लाभं प्रियानुगमने त्वरया स मेने
॥ ९५ ॥ सम्यग्विनीतमथ वर्महरं कुमारमादिश्य रक्षणविधौ विधिवत्प्रजानाम्
रोगोपसृष्टतनुदुर्वसतिं मुमुक्षुः प्रायोपवेशनमतिर्नृपतिर्बभूव ॥ ९६ ॥ तीर्थे तो
यव्यतिकरभवे जह्नुकन्यासरय्वोर्देहत्यागादमरगणनालेख्यमासाद्य सद्यः।

पूर्वाकाराधिकतररुचा संगतः कांतयासौ लीलागारेष्वरमत पुनर्नंदनाभ्यंतरेषु ८
७ इति श्रीरघुवंशे महाकाव्ये अष्टमः सर्गः ८ ॥ ॥ पितुरनंतरमुत्तरकोशला
न् समधिगम्य समाधिजितेंद्रियः दशरथः प्रशशास महारथो यमवतामवतां च धुरि
स्थितः १ अधिगतं विधिवद्यदपालयत् प्रकृतिमंडलमात्मकुलोचितम् अभवद
स्य ततो गुणवत्तरं सनगरं नगरंध्रकरौजसः २ जनपदे न गदः पदमादधावभिभवः
कुत एव सपत्नजः क्षितिरभूत्फलवत्यजनंदने शमरतेऽमरतेजसि पार्थिवे ३ उभयमेव
वदंति मनीषिणः समयवर्षितया कृतकर्मणाम् बलनिषूदनमर्थपतिं च तं श्रमनुदं म
नुदंडधरान्वयम् ४ दशदिगंतजिता रघुणा यथा श्रियमपुष्यदजेन ततः परम् त
मधिगम्य तथैव पुनर्बभौ न न महीनमहीनपराक्रमम् ५ समतया वसुवृष्टिविसर्जनै
र्नियमनादसतां च नराधिपः अनुययौ यमपुण्यजनेश्वरौ सवरुणावरुणाग्रसरं रुचा ६
न मृगयाभिरतिर्न दुरोदरं न च शशिप्रतिमाभरणं मधु न तमुदयाय नवा नवयौवना प्रि
यतमा यातमानमपाहरत् ७ न कृपणा प्रभवत्यपि वासवे न वितथा परिहासकथास्व
पि न च सपत्नजनेष्वपि तेन वागपरुषा परुषाक्षरमीरिता ८ उदयमस्तमयं च रघूद्वहाद्
उभयमानशिरे वसुधाधिपाः स हि निदेशमलंघयतामभूत्सुहृदयोहृदयः प्रतिग

ईताम् ९ अजयदेकरथेन समेदिनीं मुदधिनेमि मधिज्यशरासनः जयमघोभयदस्यदिके
बले गजवतीजवतीश्च हयाचमूः १० अवनिमेकरथेन वरूथिना जितवतः किलतस्य
धनुर्भृतः विजयदुंदुभितांययुरर्णवा घनरवा नरवाद्नसंपदः ११ स्फुरितकोटिसह
स्रमरीचिना समचिनोत्कुलिशेन हरिर्यशः सशरवृष्टिभु[illegible]बाणधिः स्वनवतान
वतामरसाननः १२ जघननिर्विषयीकृतमेखला नतुचिता[illegible]चितुम विरोधकान्
सरितुराररगणानकरोद्दला दनलकानलकाधिपविक्रमः १३ शमितपक्षबल
क्षितकोटिना शिखरिणं कुलिशेन पुरंदरः सशरवृष्टिभुवा धनुषा द्विषां स्वनवता
नवतामरसाननः १४ चरणयोर्नखरागसमृद्धिभिर्मुकुटरत्नमरीचिभिरस्पृशन् नृ
पतयः शतशो मरुतो यथा शतमखं तमखंडितपौरुषं १५ निवृत्तेसमरो
त्सवरोधसः सचिवकारितबालसुतांजलीन् समनुकंप्य सपत्नपरिग्रहा ननलका
नलकानवमां पुरी १६ उपगतो पि च मंडलनाभितामनुदितान्य सितातपवारण
ः श्रियमवेक्ष्य स रंध्रचलामभूदनलसो नलसोमसमद्युतिः १७ कतुषु ते
न विसर्जितमौलिना भुजसमाहृतदिग्वसुना कृताः कनकयूपसमुच्छ्रयशोभिनो
वितमसा तमसासरयूतटाः १८ अजिनदंडभृतं कुशमेखलां यतगिरं मृगशृंगप २२

रिपुदां श्रियमितिसंसत्तु मधुरदीक्षिता प्रसमवा समन्तास्यदीश्वरः १९ अवभृथप्रयतो नि
यतेन्द्रियः सुरसमाजसमाक्रमणोचितः नमयति स्म स केवलमुन्नतं वनमुचे नमुचेररये
शिरः २० तमपहाय ककुत्स्थकुलोद्भवं पुरुषमात्मभवं च पतिव्रता नृपतिमन्यमसेवत
देवता सकमलाकमलाघवमर्थिषु २१ समितिसंयुगमूर्ध्नि सहायतां मघवतः प्रति
पद्य महारथः स्वभुजवीर्यमगापयदुच्छ्रितं सुरवधूरवधूतभयाः शरैः २२ असकृदे
करथेन तरस्विना हरिहयाग्रसरेण धनुर्भृता दिनकराभिमुखा रणरेणवो रुरुधिरे रु
धिरेण सुरद्विषाम् २३ तमलभन्त पतिं पतिदेवताः शिखरिणामिव सागरमापगाः मगध
कोसलकेकयशासिनां दुहितरोऽहितरोपितमार्गणम् २४ प्रियतमाभिरसौ तिसृभिर्बभौ ति
सृभिर्बभौ तिसृभिरेव भुवं सह शक्तिभिः उपगतो विनिनीषुरिव प्रजाः हरिहयोऽग्र
सरोऽगविभिद्गुणः २५ अथ समाववृते कुसुमैर्नवैस्तमिव सेवितुमेकनराधिपम् यम
कुबेरजलेश्वरवज्रिणां समधुरं मधुरञ्चितविक्रमम् २६ जिगमिषुर्धनदाध्युषितां
दिशं रथयुजा परिवर्तितवाहनः दिनमुखानि रविर्हिमनिग्रहैर्विमलयन्मलयं न
गमत्यजत् २७ हिमरेवलितचन्दनपल्लवं विरहयन्मलयाद्रिमुदङ्मुखः विहग
योः कृपयेव शनैर्ययौ रविरहर्विरहध्रुवभेदयोः २८ कुसुमजन्म ततो नवपल्लवा स्त

दत्तमदपटु कोकिलकूजितम् इति यथाक्रममाविरभून्मधु द्रुमवतीमवतीर्य वनस्थली
म् २९ व्रणगुरुप्रमदाधरदुःसहं जघननिर्विषयीकृतमेखलम् न खलु तावदशेषमपो
हितु रविरलं विरलं कृतवान्हिमम् ३० परभृता मदनक्षतचेतसः प्रियसखी ल
घुवा गिरुद्योषिताम् प्रियतमानमानकरे कलहान्तरे मृदुरवा दुरवापसमागमान्
३१ अभिनयान्परिचेतुमिवोद्यता मलयमारुतकंपितपल्लवा अमदयत्सह
कारलता मनः सकलिकाकलिकामजितामपि ३२ नयगुणोपचितामिव भूप
तेः सदुपकारफलां श्रियमर्थिनः अभिययुः सरसो मधुसंभृतां कमलिनी
मलिनीरपतत्रिणः ३३ कुसुममेव न केवलमार्तवं नवमशोकतरोः स्मरदीपनम्।
किशलयप्रसवोपि विलासिनां मदयिता दयिताश्रवणार्पितः ३४ विरचिता
मधुनोपवनश्रिया मलिनवाइव पत्रविशेषकाः मधुलिहां मधुदानविशारदाः
कुरुबकाररवकारणतां ययुः ३५ उपहितं शिशिरापगमश्रिया मुकुलजाल
मशोभत किंशुके प्रणयिनीव नखक्षतमण्डनं प्रमदया मदयापितलज्जया ३६
सुवदनावदनासवसंभृत स्तदनुवादिगुणः कुसुमोद्गमः मधुकरैरकरोन्मधु
लोलुपैर्बकुलमाकुलमायतपंक्तिभिः ३७ ध्वजपटं मदनस्य धनुर्भृतः छवि

करं मुरवकुलीमुखश्रियः कुसुमकेशररेणुमलिव्रजाः सप्रपञ्चनोपवनोत्थितमन्वयुः ३८
प्रथममन्यभृताभिरुदीरिताः प्रविरला इव मुग्धवधूकथाः सुरभिगन्धिषु शुश्रुविरे गिरः
कुसुमितावनतराजिषु ३९ तिलकमस्तकहर्म्यकृतास्पदैः कुसुममध्वनुषंगसुगं
धिभिः कलमगीयत भृङ्गविलासिभिः स्मरद्युतेस्सुतेरसुलासखैः ४० गमयि
तेषु पुरेष सुखेन मां नमदतीव पान्थवधूजनः इति दयात इवालवयस्यता नरजनी
रजनीशवतीमधौ ४१ अनुसवलवदोलमृतत्सवं पटुरपि प्रियकण्ठजिघृक्षया अन
यदासनरज्जुपरिग्रहे भुजलतां जलतामबलाजनः ४२ त्यजत मानमलं बत विग्रहै
र्न पुनरेति गतं चतुरं वयः परभृताभिरितीव निवेदिते स्मरमते रमते स्म वधूजनः ४३ अनल
सान्यभृतानलसान्मनः कमलधूलिभृता मरुतेरिता कुसुमचारुनताध्वगयोषिता
मसमशोकमशोकलताकरोत् ४४ लघयति स्म न पत्युपराद्धतां न सहकारतरु
स्तरुणीकृताम् कुसुमितानमितालिनिरुन्मदैः स्मरसमाधिकरोधिकरोषिताम्
४५ श्रुतिसुभगनमरस्वरगीतयः कुसुमकोमलदन्तरुचो बभुः उपवनान्तलताः पव
नाहतैः किशलयैः सलयैरिव पाणिभिः ४६ अपरयोषितया विशदप्रभैः सुरतरा
गपरिश्रमनोदिभिः कुसुमचापमतेजयदंशुभिर्हिमकरो मकरोर्जितकेतनम् ४७ ॥

ऋतुकृतान्नानदीमिलनश्रियः प्रतिनिधिः क्रमैकान्तरणस्पदात् स्तवकयः कुसुमंदधुर
हितं तदलकेदलकेसरपेशलम् ४८ दसनचंद्रिकयाव्यवभासितं हसितमासवगं
धि मधोरिव तिलकपुष्पमसेव्यत षट्पदैः शुचिरसं चिरसंचितमीप्सुभिः ४९ अ
लिनिरंजनबिंदुमनोहरैः कुसुमपंक्तिनिपातितैरंकितः नखलु शोभयति स्म वनस्थ
लीं नतिलकस्तिलकः प्रमदामिव ५० ललितविभ्रमबंधविचक्षणं सुरभिगंधप
राजितकेसरम् पतिषु निर्विविशुर्मधुमंगनाः स्मरसखं रसखंडनवर्जितम् ५१ शुशु
भिरे स्मितचारुतराननाः स्त्रिय इव श्लथसिंजितमेखलाः विकचतामरसा गृहदीर्घि
काः मदकलोदकलोलविहंगमाः ५२ अरुणरागनिषेधिभिरंशुकैः श्रवणलब्धप
दैश्च यवांकुरैः परभृताविरुतैश्च विलासिनः स्मरबलैरबलैकरसाः कृताः ५३ वि
शदचंद्रकरस्सुषमा कृता कुसुमितद्रुममुन्मदकोकिलम् तदुपभोगरसं हिमवर्षि
णः परभृतोपमतां ययौ ५४ उपचितावयवा शुचिभिः कणैरलिकदंबकयोग
मुपेयुषी सदृशकांतिरलक्ष्यत मंजरी तिलकजालकजालकमौक्तिकैः ५५
उपययौ तनुतां मधुखंडिता हिमकरोदयपांडुमुखच्छविः सदृशमिष्टसमागम
निर्वृतिं वनितयानितया रजनीवधूः ५६ अमदयन्मधुगंधसनाथया किसल

याधरसंगतया मनः कुसुमसंभृतया नवमल्लिका स्मितरुचा नरपतिश्चकमे मृगयारतिं स
मधुमन्मधु मन्मथसंनिभः ५८ परिचयं चललक्ष्यनिपातने भयरुषोश्च तदिंगितबोधनम्
श्रमजयात्प्रगुणांच करोति सा तनुमतोनुमतः सचिवैर्ययौ ५९ मृगवनोपगमक्षमवेषभृद्विपु
लकंठनिषक्तशरासनः गगनमश्वखुरोद्धतरेणुभिर्नृसविता सवितानमिवाकरोत् ६० ग्र
थितमौलिरसौ वनमालया तरुपलाशसवर्णतनुच्छदः तुरगवल्गनचंचलकुंडलो विरुरु
चे रुरुचेष्टितभूमिषु ६१ तरुलताविनिवेशितविग्रहाः भ्रमरसंक्रमितेक्षणवृत्तयः दद
शुरध्वनि तं वनदेवताः सुनयनं नयनंदितकोशलम् ६२ अथ नभस्य इव त्रिदशायुधं
कनकपिंगतडिद्गुणसंगतम् धनुरधिज्यमनाधिरुपाददे नरवरो रवरोषितकेसरी ६३
श्वगणिवागुरिकैः प्रथमास्थितं व्यपगतानलदस्यु विवेश सः स्थिरतुरंगमभूमि निपानव
न्मृगवयोगवयोपचितं वनम् ६४ तस्य स्तनप्रणयिभिर्मुहुरेणशावैर्व्याहन्यमानहरिणी
गमनं पुरस्तात् आविर्बभूव कुशगर्भमुखं मृगाणां यूथं तदग्रसरगर्वितकृष्णसारम् ६५
तत्प्रार्थितं जवनवाजिगतेन राज्ञा तूणीमुखोद्धृतशरेण विशीर्णपंक्ति श्यामीचकार व
नमाकुलदृष्टिपातैर्वातेरितोत्पलदलप्रकरैरिवार्द्रैः ६६ लक्ष्यीकृतस्य हरिणस्य हरिप्रभा
वः प्रेक्ष्य स्थितं सहचरीं व्यवधाय कायम् आकर्णकृष्टमपि कामितया स धन्वी बाणं कृपामृदुम

न्ताः प्रतिसंजहारः ६७ तस्यापरेष्वपि मृगेषु शरान्मुमुक्षोः कर्णान्तमेत्य बिभिदे निबिडोऽपि मुष्टिः।
त्रासातिमात्रचटुलैः स्मरतः सुनेत्रैः प्रौढप्रियानयनविभ्रमचेष्टितानि ६८ उत्तस्थुषः।
शिशिरपल्वलपंकमध्यान्मुस्ताप्ररोहकवलावयवानुकीर्णम् जग्राह स द्रुतवराहकुल-
स्य मार्गं सुव्यक्तमार्द्रपदपंक्तिभिरायताभिः ६९ तं वाहनादवनतोत्तरकायमीषद्विध्यन्त-
मुद्धतसटाः प्रतिहन्तुमीषुः नात्मानमस्य विविदुः सहसा वराहाः वृक्षेषु विद्धमिषुभिर्जघ-
नाश्रितेषु ७० तेनाभिघातरभसस्य विकृष्य पत्री वन्यस्य नेत्रविवरे महिषस्य मुक्तः
निर्भिद्य विग्रहमशोणितलिप्तपुंखस्तं पातयां प्रथममास पपात पश्चात् ७१ प्रायो वि-
षाणपरिमोक्षलघूत्तमांगान् खड्गांश्चकार नृपतिर्निशितैः क्षुरप्रैः शृंगं स दृप्तविनयाधि-
कृतः परेषामत्युच्छ्रितं न ममृषे न तु दीर्घमायुः ७२ व्याघ्रानभीरभिमुखोत्पतितान्गु-
हाभ्यः फुल्लासनाग्रविटपानिव वायुरुग्णान् शिक्षाविशेषलघुहस्ततया निमेषा-
त्तूणीचकार शरपूरितवक्त्ररन्ध्रान् ७३ निर्घातोग्रैः कुंजलीनाञ्जिघांसुर्ज्यानिर्घोषैः
क्षोभयामास सिंहान् नूनं तेषामभ्यसूयापरोऽभूद्वीर्योदग्रे राजशब्दे मृगाणाम् ७-
४ तान्हत्वा गजकुलबद्धतीव्रवैरान् काकुत्स्थः कुटिलनखाग्रलग्नमुक्तान् आत्मानं र- 
णकृतकर्मणां गजानामानृण्यं गतमिव मार्गणैरमंस्त ७५ चमरान्परितः प्रवर्तिता-

ष्टः क्वचिदाकर्णनिकृष्टभल्लवर्षी नृपतीन्निवर्त्तान् जगाम शान्तिं स्मितबालव्यजनैर्व्वियोज्य
सद्यः ७६ अपि तुरगसमीपादुत्पतंतं मयूरं न स रुचिरकलापं बाणलक्ष्यीचकार सपदि
गतमनस्कश्चित्रमाल्यानुकीर्णे रतिविगलितबंधे केशपाशे प्रियायाः ७७ तस्य कर्कश
विहारसंभवं स्वेदमाननविलग्नजालकम् आचचाम सतुषारशीकरो भिन्नपल्लवपु
टो वनानिलः ७८ इति विस्मृतान्यकरणीयमात्मनः सचिवावलंबितधुरं नराधिपं
परिवृद्धरागमनुबंधसेवया मृगया जहार चतुरेव कामिनी ७९ स ललितकुसुमप्र
बालशय्यां ज्वलितमहौषधिदीपिकासनाथाम् नरपतिरतिबाहयांबभूव क्वचिदस
मेतपरिच्छदस्त्रियामाम् ८० उषसि स गजयूथकर्णतालैः पटुपटहध्वनिभिर्विनी
तनिद्रः अरमत मधुराणि तत्र शृण्वन् विहगविकूजितबंदिमंगलानि ८१ अथ जातु रुरो
र्गृहीतवर्त्मा विपिने पार्श्वचरैरलक्ष्यमाणः श्रमफेनमुचा तपस्विगाढां तमसां प्राप नदीं
तुरंगमेण ८२ कुंभपूरणभवः पटुरुच्चैरुच्चचार निनदोंऽभसि तस्याः तत्र स द्विरदबृं
हितशंकी शब्दपातिनमिषुं विससर्ज ८३ नृपतेः प्रतिषिद्धमेव यत्तत् कृतवान्पंक्तिरथो
विलंघ्य तत् अपथे पदमर्पयंति हि श्रुतवंतोऽपि रजोनिमीलिताः ८४ हा तातेति क्रंदि
तमाकर्ण्य विषण्णः तस्यान्विष्यन्वेतसगूढं प्रभवं सः शल्यप्रोतं प्रेक्ष्य सकुंभं मुनिपुत्रं

तापादंतःशल्यइवासीत्क्षितिपोपि ७५ तेनावतीर्य तुरगात्प्रथितान्वयेन पृष्टान्वयः सजलकुंभ
निषण्णदेहः तस्मै द्विजेतरतपस्विसुतं स्खलद्भिरात्मानमक्षरपदैः कथयांबभूव ७६ तच्चो
दितश्च तमनुद्धृतशल्यमेव पित्रोः सकाशमवसन्नदृशोर्निनाय तांभ्यां तथागतमुपेत्य तमे
कपुत्रमज्ञानतः स्वचरितं नृपतिः शशंस ७७ तौ दंपती बहु विलप्य शिशोः प्रहर्त्रा शल्यं नि
खातमुदहारयतामुरस्तः सोभूत्परासुरथ भूमिपतिं शशाप हस्तार्पितैर्नयनवारि
भिरेव वृद्धः ७८ दिष्टांतमाप्स्यति भवानपि पुत्रशोकादंते वयस्यहमिवेति तमुक्तवंतम्
आक्रांतपूर्वमिव मुक्तविषं भुजंगं प्रोवाच कोशलपतिः प्रथमापराद्धः ७९ शापोप्य
दृष्टतनयाननपद्मशोभे सानुग्रहो भगवता मयि पातितोयम् कृष्यां दहन्नपि खलु क्षितिमि
न्धनेद्धो बीजप्ररोहजननीं ज्वलनः करोति ८० इत्थं गते गतघृणः किमयं विधत्तां
वध्यस्तवेत्यभिहितो वसुधाधिपेन एधान् हुताशनवतः स मुनिर्ययाचे पुत्रं परासुम
नुगंतुमनाः सदारः ८१ प्राप्तानुगः सपदि शासनमस्य राजा संपाद्य पातकविलुप्तधृति
र्निवृत्तः अंतर्निविष्टपदमात्मविनाशहेतुं शापं दधज्ज्वलनमौर्वमिवांबुराशिः ८२ इति श्री
रघुवंशे महाकाव्ये श्रीकालिदासकृतौ मृगयावर्णनो नाम नवमः सर्गः ॥ ९ ॥ पृथिवीं शासतस्तस्य
पाकशासनतेजसः किंचिदूनमनूनर्द्धेः शरदामयुतं ययौ १ न चोपलेभे पूर्वेषामृणनिर्मो ३७

ऽसाधनम् सुताभिधानं स ज्योतिः सद्यःशोकतमोपहम् २ मनोर्वंश्यश्चिरं तस्मिन्नन
लिप्तकर्मतन्तौ निमज्जतु स्वधामानदः शोण इवाभवत् ३ अतिष्ठत्प्रत्ययापेक्ष
संततिः स चिरं नृपः प्राङ्मन्थादनभिव्यक्तरत्नोत्पत्तिरिवार्णवः ४ ऋष्यशृङ्गादयस्त
स्य संतः संतानकाङ्क्षिणः आरेभिरे यतात्मानः पुत्रीयामिष्टिमृत्विजः ५ तस्मिन्न
वसरे देवाः पौलस्त्योपप्लुता हरिम् अभिजग्मुर्निदाघार्ताश्छायावृक्षमिवाध्वगाः ।
६ ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्ष
णम् ७ भोगिभोगासनासीनं ददृशुस्तं दिवौकसः तत्फणामण्डलोदर्चिर्मणिद्योति
तविग्रहम् ८ श्रियः पद्मनिषण्णायाः क्षौमान्तरितमेखले अंके निक्षिप्तचरणमास्तीर्ण
करपल्लवे ९ प्रबुद्धपुण्डरीकाक्षं बालातपनिभांशुकं दिवसं शारदमिव प्रारम्भ
सुखदर्शनम् १० प्रभानुलिप्तश्रीवत्सं लक्ष्मीविभ्रमदर्पणम् कौस्तुभाख्यमपां सारं
बिभ्राणं बृहतोरसा ११ बाहुभिर्विटपाकारैर्दिव्याभरणभूषितैः आविर्भूतमपां
मध्ये पारिजातमिवापरम् १२ दैत्यस्त्रीगण्डलेखानां मदरागविलोपिभिः हेतिभिः
चेतनावद्भिरुदीरितजयस्वनम् १३ मुक्तशेषविरोधेन कुलिशव्रणलक्ष्मणा उप
स्थितं प्राञ्जलिना विनीतेन गरुत्मता १४ योगनिद्रान्तविशदैः पावनैरवलोकनैः भृ

ष्यादीनथ दृष्टं तं सौख्यशायनिकान्मुनीन् १५ अष्टनिरादिक्रियाकलकम् प्रणिपत्य सुरा
स्तस्मै शमयित्रे सुरद्विषाम् अथैनं तुष्टुवुः स्तुत्यमवाङ्मनसगोचरम् १६ नमो विश्वसृजे
पूर्वं विश्वं तदनु बिभ्रते अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधास्थितात्मने १७ एकः कारणत
स्तांता मवस्थाः प्रतिपद्यसे नानात्वं रागसंयोगात् स्फटिकस्येव तेस्मृतम् १८ रसान्तरा
ण्येकरसं यथा दिव्यं पयोश्नुते देशे देशे गुणेष्वेव मवस्थास्त्वमविक्रियः १९ अमेयो
मितलोकस्त्व मनर्थी प्रार्थनावहः अजितो जिष्णुरत्यंत मव्यक्तो व्यक्तकारणम् २० हृ
दयस्थमनासन्न मकामं त्वां तपस्विनम् दयालु मनघस्पृष्टं पुराणमजरं विदुः २१ स
र्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः सर्वप्रभुरनीशस्त्व मेकस्त्वं सर्वरूपभाक्
२२ सप्तसामोपगीतं त्वां सप्तार्णवजलेशयम् सप्तार्चिर्मुखमाचख्युः सप्तलोकैकसं
श्रयम् २३ चतुर्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगा चतुर्वर्णमयो लोक स्त्वत्तः सर्वं चतुर्मु
खात् २४ अभ्यासनिगृहीतेन मनसा हृदयाश्रयम् ज्योतिर्मयं विचिन्वंति योगिनस्त्वां
विमुक्तये २५ अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः स्वपतो जागरूकस्य या
थार्थ्यं वेद कस्तव २६ शब्दादीन्विषयान्भोक्तुं चरितुं दुश्चरं तपः पर्याप्तोसि प्र ३८
जाः पातुः मौदासीन्येन वर्तितुं २७ बहुधाप्यागमैर्भिन्नाः पंथानः सिद्धिहेतवः त्वय्येव

निपतंत्योघा जाह्नवीया इवार्णवे २८ त्वय्यावेशितचित्तानां त्वत्समर्पितकर्मणाम् गतिस्त्वं वी
तरागाणामभूयः सन्निवृत्तये २९ प्रत्यक्षोप्यपरिच्छेद्यो मह्यादिर्महिमातव आप्तवागनुमा
नाभ्यां साध्यं त्वांप्रतिकाकथा ३० केवलंस्मरणेनापि पुनासि पुरुषंयदा अनेनवृत्तयः
शेषा निवेदितफलास्त्वयि ३१ उदधेरिवरत्नानि तेजांसीव विवस्वतः स्तुतिभ्यो व्यतिरिच्यं
ते दूरेणचरितानिते ३२ अनवाप्तमवाप्तव्यं नतेकिंचनविद्यते लोकानुग्रहएवैको हेतुस्तेजन्म
कर्मणोः ३३ महिमानंयदुत्कीर्त्य तवसंह्रियतेवचः श्रमेणतदशक्त्यावा नगुणानामियत्तया
३४ इतिप्रसादयामासुस्तेसुरास्तमधोक्षजम् भूतार्थव्याहृतिः साहि नस्तुतिः परमेष्ठिनः।
तस्मैकुशलसंप्रश्नव्यंजितप्रीतयेसुराः भयमप्रलयोद्वेलादाचख्युर्नैरृतोदधेः ३६ अथवेला
समासन्नशैलरंध्रानुवादिना स्वरेणोवाच भगवान् परिभूतार्णवध्वनिः ३७ पुराणस्यकवेस्त
स्य वर्णस्थानसमीरिता बभूवकृतसंस्कारा चरितार्थैवभारती ३८ बभौसदशनज्योत्स्ना साविभो
र्वदनोद्गता निर्यातशेषाचरणाद्गंगेवोर्ध्वप्रवर्त्तिनी ३९ जानेवोरक्षसाक्रांतावनुभावपरा
क्रमौ अंगिनांतमसेवोभौ गुणौप्रथममध्यमौ ४० विदितंतप्यमानंच तेनमेभुवनत्रयम्।
अकामोपनतेनेव साधोर्हृदयमेनसा ४१ कार्येषुचैककार्यत्वादभ्यर्थ्योस्मिनवज्रिणा स्व
यमेवहिवातोग्नेः सारथ्यंप्रतिपद्यते ४२ स्वासिधारापरिहृतः कामंचक्रस्यतेनमे स्थापितो

दशमो मूर्द्धा लब्धांश इव रक्षसा ४३ स्रष्टुर्वरातिसर्गात्तु मया तस्य दुरात्मनः अत्यारूढं रि
पोः सोढं चन्दनेनेव भोगिनः ४४ धातारं तपसा प्रीतं ययाचे स हि राक्षसः दैवात्सर्गाद
वध्यत्वं मर्त्येष्वास्थापराङ्मुखः ४५ सोऽहं दाशरथिर्भूत्वा रणभूमेर्बलिक्षमम् करिष्या
मि शरैस्तीक्ष्णैस्तच्छिरःकमलोच्चयम् ४६ अचिराद्यज्वभिर्भागं कल्पितं विधिवत्पुनः
मायाविभिरनालीढमादास्यध्वे निशाचरैः ४७ वैमानिकाः पुण्यकृतस्त्यजन्तु मरुतां
पथि पुष्पकालोकसंक्षोभं मेघावरणतत्पराः ४८ मोक्ष्यध्वे सुरबन्दीनां वेणीबन्धानदू
षितान् शापयन्त्रितपौलस्त्यबलात्कारकचग्रहैः ४९ रावणावग्रहक्लान्तमिति वाग
मृतेन सः अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे ५० पुरुहूतप्रभृतयः सुरकार्योद्यतं
सुराः अंशैरनुययुर्विष्णुं पुष्पैर्वायुमिव द्रुमाः ५१ अथ तस्य विशाम्पत्युरन्ते काम्यस्य क
र्मणः पुरुषः प्रबभूवाग्नेर्विस्मयेन सहर्त्विजाम् ५२ हेमपात्रगतं दोर्भ्यामादधानः
पयश्चरुम् अनुप्रवेशादाद्यस्य पुंसस्तेनापि दुर्वहम् ५३ प्राजापत्योपनीतं तद
न्नं प्रत्यग्रहीन्नृपः वृषेव पयसां सारमाविष्कृतमुदन्वता ५४ अनेन कथिता राज्ञो
गुणास्तस्यान्यदुर्लभाः प्रसूतिं चकमे तस्मिंस्त्रैलोक्यप्रभवोऽपि यत् ५५ स तेजो वै
ष्णवं पत्न्योर्विभेजे चरुसंज्ञितं द्यावापृथिव्योः प्रत्यग्रमहर्पतिरिवातपम् ५६ अर्चिता

तस्यकौशल्या प्रियाकैकेयवंशजा अतः संभाविता ताभ्यां सुमित्रामैछदीश्वरः ५७ तेब
हुज्ञस्यचित्तज्ञे पत्न्यौपत्युर्महीक्षितः चरोरर्धार्द्धभागाभ्यां तामयोजयतामुभे ५८ साहि
प्रणयवत्यासीत्सपत्न्योरुभयोरपि भ्रमरीवारणस्येव मदनिस्यंदरेखयोः ५९ ताभिर्ग
र्भः प्रजाभूत्यै दध्रेदेवांशसंभवः सौरीभिरिव नाडीभि रमृताख्याभिरम्मयः ६० सम
मापन्नसत्वास्ता रेजुरापांडुरत्विषः अंतर्गतफलारंभा सस्यानामिव संपदः ६१ गुप्तं
ददृशुरात्मानं सर्वाः स्वप्नेषुवामनैः जलजासिगदाशार्ङ्गचक्रलांछितमूर्तिभिः ६२
हेमपक्षप्रभाजालं गगनेचवितन्वता उह्यंतेस्मसुपर्णेन वेगाकृष्टपयोमुचा ६३ बि
भ्रत्या कौस्तुभन्यासं स्तनांतरविलंबिनम् पर्युपास्यंतलक्ष्म्याच पद्मव्यजनहस्तया ६४
कृताभिषेकैर्दिव्यायां त्रिस्रोतसिचसप्तभिः ब्रह्मर्षिभिः परंब्रह्म गृणद्भिरुपतस्थिरे ६५ ता
भ्यस्तथाविधान्स्वप्नान् श्रुत्वाप्रीतोहिपार्थिवः मेनेपरार्ध्यमात्मानं गुरुत्वेनजगद्गुरोः ६
६ विभक्तात्मा विभुस्तासामेकः कुक्षिष्वनेकधा उवासप्रतिमाचंद्रः प्रसन्नानामपामि
व ६७ अथाग्र्यमहिषीराज्ञः प्रसूतिसमयेसती पुत्रंतमोपहंलेभे नक्तंज्योतिरिवौषधिः
रामइत्यभिरामेण वपुषातस्यचोदितः नामधेयंगुरुश्चक्रे जगत्प्रथममंगलम् ६९ रघु
वंशप्रदीपेन तेनाप्रतिमतेजसा रक्षागृहगतादीपाः प्रत्यादिष्टाइवाभवन् ७० शय्या

गतेनरामेण माताज्ञातोदरीबभौ सैकतांभोजबलिना जाह्नवीवशरत्कृशा ७१ कैकेय्यास्तनयो
जज्ञे भरतोनामशीलवान् जनयित्रीमलंचक्रे यः प्रश्रयइवश्रियम् ७२ सुतौलक्ष्मणश
त्रुघ्नौ सुमित्रासुषुवेयमौ सम्यगागमिताविद्या प्रबोधविनयाविव ७३ निर्दोषमभवत्
सर्वं माविःकृतगुणंजगत् अन्वगादिवहिस्वर्गो गांगतंपुरुषोत्तमम् ७४ तस्योदयेचतु
र्मूर्तेः पौलस्त्यचकितेश्वराः विरजस्कैर्नभस्वद्भिः दिशउच्छ्वसिताइव ७५ कृशानुरपधूम
त्वात्प्रसन्नत्वात्प्रभाकरः रक्षोविप्रकृतावास्तामपविद्धशुचाविव ७६ दशाननकिरीटेभ्य
स्तत्क्षणंराक्षसश्रियः मणिव्याजेनपर्यस्ताः पृथिव्यामश्रुबिंदवः ७७ पुत्रजन्मप्रवे
श्यानां तूर्याणांतस्यपुत्रिणः आरंभंप्रथमंचक्रुः देवदुंदुभयोदिवि ७८ संतानकमयी
वृष्टिर्भवनेचास्यपेतुषी सन्मंगलोपचाराणां सैवादिरचनाभवत् ७९ कुमाराःकृत
संस्काराः तेधात्रीस्तन्यपायिनः आनंदेनाग्रजेनेव सममेववृधिरेपितुः ८० स्वाभावि
कंविनीतत्वं तेषांविनयकर्मणा मुमूर्च्छसहजंतेजो हविषेवहविर्भुजाम् ८१ परस्प
राविरुद्धास्ते तद्रघोरनघंकुलम् अलमुद्द्योतयामासुर्देवारण्यमिवर्तवः ८२ समानेपि
हिसौभ्रात्रे यथोभौरामलक्ष्मणौ तथाभरतशत्रुघ्नौ प्रीत्याद्वंद्वंबभूवतुः ८३ तेषांद्व ४०
योर्द्वयोरैक्यं बिभिदेनकदाचन यथावायुविभावस्वोर्यथाचंद्रसमुद्रयोः ८४ तेप्र

नां प्रजानाथाः तेजसां श्रेयसां च मनोज्ञकुर्विं दाशरथेरूपा मालादिवसा इव ७५ चतुर्धा
सर्वतो व्यस्तः प्रसवः पृथिवीपतेः धर्मार्थकाममोक्षाणां अवतार इवांगवान् ७६ गुणैराराध्यामासुस्ते गुरुं गुरुवत्सलाः तमेव चतुरंतेशं रत्नैरिव महार्णवाः ७७ सुरगज इव दंतैर्भग्नदैत्यासिधारै र्नय इव पणबंधव्यक्तयोगैरुपायैः। हरिरिव युगदीर्घैर्दोर्भिरंशैस्तदीयैः पतिरवनिपतीनां तैश्चतुर्भिश्चकाशे ७८ इति श्रीरघुवंशे महाकाव्ये पुत्रजन्मरामावतारो नाम दशमः सर्गः १० ॥ कौशिकेन स किल क्षितीश्वरो राममध्वरविघातशांतये काकपक्षधरमेत्य याचितस्तेजसां हि न वयः समीक्ष्यते १ कृच्छ्रलब्धमपि मेदिनीपतिस्तं दिदेश मुनये सलक्ष्मणम् अप्यसुप्रणयिनां रघोः कुले न व्यहन्यत कदाचिदर्थिता २ यावदादिशति पार्थिवस्तयोर्निर्गमाय पुरमार्गसत्क्रियाम् तावदाशु विहिता मरुत्सखैः सा सपुष्पजलवर्षिभिर्घनैः ३ तौ निदेशकरणोद्यतौ पितुर्धन्विनौ चरणयोर्निपेततुः भूपतेरपि तयोः प्रवत्स्यतोर्नम्रयोरुपरि बाष्पबिंदवः ४ लक्ष्मणानुचरमेव राघवं नेतुमैच्छदृषिरित्यसौ नृपः आशिषं प्रयुयुजे न वाहिनीं सा हि रक्षणविधौ तयोः क्षमा ५ तौ पितुर्नयनजेन वारिणा किंचिदुक्षितशिखंडकावुभौ धन्विनौ तमृषिमन्वगच्छतां पौरदृष्टिकृतमार्गतोरणौ ६ मातृवर्गचरणस्पृशौ मुनेस्तौ प्रपद्य पदवीं महौजसः रेजतुः

गतिवन्नाअवर्तिनौ भास्करस्य मधुमाधवाविव ७ वीचिलोलभुजयोस्तयोर्गतिं शैशवाच्चपल
मप्यशोभत तोयदागम इवोद्ध्यभिद्ययोर्नामधेयसदृशं विचेष्टितम् ८ तौ बलातिबलयोः
प्रभावतो विद्ययोर्मुनिप्रदिष्टयोः पथि मम्लतुर्न मणिकुट्टिमोचितौ मातृपार्श्वपरिवर्तिना
विव ९ पूर्ववृत्तकथनैः पुराविदः सानुजः पितृसखस्य राघवः उह्यमान इव वाहि
नोचितः पादचारमपि न व्यभावयत् १० तौ सरांसि रसवद्भिरम्बुभिः कूजितैः श्रुतिसुखैः
पतत्रिणः वायवः सुरभिपुष्परेणुभिः छायया च जलदाः सिषेविरे ११ नाम्भसां कमल
शोभिनां तथा शाखिनां न च परिश्रमच्छिदाम् दर्शनेन लघुना यथा तयोः प्रीतिमापु
रुभयोस्तपस्विनः १२ स्थाणुदग्धवपुषस्तपोवनं प्राप्य दाशरथिरात्तकार्मुकः विग्र
हेण मदनस्य चारुणा सोऽभवत्प्रतिनिधिर्न कर्मणा १३ तौ सुकेतुसुतया खिलीकृते
कौशिकाद्विदितशापया पथि निन्यतुः स्थलनिवेशिताटनी लीलयैव धनुषी अधिज्य
तां ज्यानिनादमथ गृह्णती तयोः प्रादुरास बहुलक्षपाछविः ताडका चलकपालकुं
डला कालिकेव निबिडा बलाकिनी १५ तीव्रवेगधुतमार्गवृक्षया प्रेतचीवरवसा स्व
नोग्रया अभ्यभावि भरताग्रजस्तया वात्ययेव पितृकाननोत्थया १६ उद्यतैकभुजय ४२
ष्टिमायतीं श्रोणिलम्बिपुरुषान्त्रमेखलाम् तां विलोक्य वनितावधे घृणां पत्रिणा सह मुमो

च राघवः १७ बाणभिन्नहृदया निपेतुषी सा स्वकाननभुवं न केवलाम् विष्टपत्रयपरा
यस्थिरां रावणश्रियमपि व्यकंपयत् १८ यच्चकार विवरं शिलाघने ताडकोरसि स राम
सायकः अप्रविष्टविषयस्य रक्षसां द्वारतामगमदंतकस्य तत् १९ राममन्मथशरेण ता-
डिता दुःसहेन हृदयेन निशाचरी गंधवद्रुधिरचंदनोक्षिता जीवितेशवसतिं जगाम सा २०
नैरृतघ्नमथ मंत्रवन्मुनेः प्रापदस्त्रमवदानतोषितात् ज्योतिरिंधननिपाति भास्करात् सूर्यकांत इ
व ताडकांतकः २१ वामनाश्रमपदं ततः परं पावनं श्रुतमृषेरुपेयिवान् उन्मनाः प्रथमजन्मचे
ष्टितान्यस्मरन्नपि बभूव राघवः २२ आससाद मुनिरात्मनस्ततः शिष्यवर्गपरिकल्पितार्
हणम् बद्धपल्लवपुटांजलिद्रुमं दर्शनोन्मुखमृगं तपोवनम् २३ तत्र दीक्षितमृषिं ररक्ष
तुर्विघ्नतो दशरथात्मजौ शरैः लोकमंधतमसात्क्रमोदितौ रश्मिभिः शशिदिवाकराविव २
४ वीक्ष्य वेदिमथ रक्तबिंदुभिः बंधुजीवपृथुभिः प्रदूषिताम् संभ्रमोऽभवदपोढ
कर्मणाम् ऋत्विजां च्युतविकंकतस्रुचाम् २५ उन्मुखः सपदि लक्ष्मणाग्रजो बाणमाश्रय
मुखात्समुद्धरन् रक्षसां बलमपश्यदंबरे गृध्रपक्षपवनेरितध्वजम् २६ तत्र यावधिपती
मखद्विषां तौ शरव्यमकरोत्स नेतरान् किं महोरगविसर्पिविक्रमो राजिलेषु गरुडः प्रवर्त्त
ते २७ सोऽस्त्रमुग्रजवमस्त्रकोविदः संदधे धनुषि वायुदैवतम् तेन शैलगुरुमप्यपातय

त पक्षवन्तमिव ताडकासुतम् २८ यः सुबाहुरिति राक्षसोऽपरस्तत्र तत्र विससर्प मायया तं क्षु
रप्रशकलीकृतं कृती पत्रिणां व्यभजदाश्रमाद्बहिः २९ इत्यपास्तमखविघ्नयोस्तयोः सां
युगीनमभिनंद्य विक्रमम् ऋत्विजः कुलपतेर्यथाक्रमं वाग्यतस्य निरवर्तयन्क्रियाः ॥
३० तेन मंत्रयत संस्कृतस्य च मैथिलः स मिथिलां व्रजन्वशी राघवावपि निनाय विभ्र
तौ तत्क्रतुः श्रवणांकुतूहलम् ३१ तौ प्रणामचलकाकपक्षकौ भ्रातरावभृथसंस्कृतं
मुनिः आशिषामनुपदं समस्पृशत् दर्भपाटिततलेन पाणिना ३२ तैशिरेषु वसतिर्ग
ताध्वभिः सायमाश्रमतरुष्वगृह्यत येषु दीर्घतपसः परिग्रहो वासवक्षणकलत्रतां य
यौ ३३ प्रत्यपद्यत चिरस्य यत्पुनश्चारु गौतमवधूः शिलामयी स्वं वपुः सकलकिल्बि
षच्छिदां रामपादरजसामनुग्रहः ३४ राघवान्वितमुपस्थितं मुनिं तं निशम्य जनको जना
नेश्वरः अर्थकामसहितं सपर्यया देहबद्धमिव धर्ममभ्यगात् ३५ तौ विदेहनगरीनि
वासिनां गां गताविव दिवः पुनर्वसू मन्यते स्म पिबतां विलोचनैः पक्ष्मपातमपि वंचनां म
नः ३६ यूपवत्यवसिते क्रियाविधौ कालवित्कुशिकवंशवर्द्धनः राममिष्वसनदर्शनोत्सु
कं मैथिलाय कथयां बभूव सः ३७ तस्य वीक्ष्य ललितं वपुः शिशोः पार्थिवः प्रथितवं ४२
शजन्मनः स्वं विचिंत्य च धनुर्दुरानमं पीडितो दुहितृशुल्कसंस्थया ३८ अब्रवीच्च भग

तन्मतंगजैः यत्नदृग्नि रथिकर्मभिः करम् तत्र नागमनुमंत्रमुत्सहे सोथवृत्तिकलभस्य चेष्टित
म् ३९ क्व पिता दिवृद्धानरेश्वरा स्तेन तात धनुषा धनुःस्ततः ज्यानिघातकविनत्वचो भुजा
न् सान्त्विधूय शिगिति श्रुतस्थिरे ४० अस्तु वा च तदृषिर्निशम्य तां सात्तोयमथ वाकृतं गिरा।
चाप एव तव तोत्र विष्यति व्यक्तिशक्तिरशनिर्गिराविव ४१ इत्थमाप्तवचनात्स पौरुषं काक
पक्षकधरेपि राघवे श्रद्दधे त्रिदशगोपमात्रके दाहशक्तिमिव कृष्णवर्त्मनि ४२ व्यादिदे
शगणशोथ पार्श्वगान् कार्मुकाभिहरणाय मैथिलः तैजसस्य धनुषः प्रवृत्तये तोयदानिव स
हस्रलोचनः ४३। तत्प्रसुप्तभुजगेंद्रभीषणं वीक्ष्य दाशरथिराददे धनुः विद्रुतक्रतुमृगानुसा
रिणं येन बाणमसृजद्वृषध्वजः ४४ आततज्यमकरोत्स संसदा विस्मयस्तिमितनेत्रा
मीक्षितः शैलसारमपि नातियत्नतः पुष्पचापमिव पेशलं स्मरः ४५ भज्यमानमतिमात्रक
र्षणात्तेन वज्रपरुषस्वनं धनुः भार्गवाय दृढमन्यवे पुनः क्षत्रमुद्यतमिव न्यवेदयत् ४६ मै
थिलः सपदि सत्यसंगरो राघवाय तनयामयोनिजाम् सन्निधौ द्युतिमतस्तपोनिधे रग्निसा
क्षिकमिवातिसृष्टवान् प्राहिणोच्च महितं महाद्युतिः कोशलाधिपतये पुरोधसम् भृत्यभा
वि दुहितुः परिग्रहाद्दिश्यतां कुलमिदं निमेरिति ४८ उत्सुकः स्वसुतदारकर्मणा सोप्यवक्रुस
त्तपागतश्चतम् गौतमस्य तनयो नकूलवाक् आर्थितं हि सुकृतामकालहृत ४९ अन्वियेष

सदृशीं सच स्नुषां प्रापचैनमनुकूलवाग्द्विजः सद्य एव सुकृतां हि पच्यते कल्पवृक्षफलध
र्मिकांक्षितम् ५० तस्य कल्पितपुरस्क्रियाविधेः शुश्रुवान्वचनमग्रजन्मनः उच्चचाल
बलभित्सखो वशी सैन्यरेणुमुषितार्कदीधितिः ५१ आससाद मिथिलां स वेष्टयन्पी
डितोपवनपादपां बलैः प्रीतिरोधमसहिष्ट सा पुरी स्त्रीव कान्तपरिभोगमायतम् ५२
तौ समेत्य समये स्थितावुभौ भूपती वरुणवासवोपमौ कन्यकातनयकौतुकक्रियां
स्वप्रभावसदृशीं वितेनतुः ५३ पार्थिवीमुदवहद्रघूद्वहो लक्ष्मणस्तदनुजामथो
र्मिलाम् यौ तयोरवरजौ वरौजसौ तौ कुशध्वजसुते सुमध्यमे ५४ ते चतुर्थसहि
तास्त्रयो बभुः सूनवो नववधूपरिग्रहाः सामदानविधिभेदनिग्रहाः सिद्धिमन्त इ
व तस्य भूपते ५५ ता नराधिपसुता नृपात्मजैस्ते च ताभिरगमन्कृतार्थताम् सोऽभ
वद्वरवधूसमागमः प्रत्ययप्रकृतियोगसन्निभः ५६ एवमात्तरतिरात्मसंभवांस्ता
न्निवेश्य चतुरोऽपि तत्र सः अध्वसु त्रिषु विसृष्टमैथिलः स्वां पुरीं दशरथो न्यवर्तत ५७
तस्य जातु मरुतः प्रतीपगा वर्त्मसु ध्वजतरुप्रमाथिनः चिक्लिशुर्भृशतया वरूथिनी
मुत्तटा इव नदीरयाः स्थलीम् ५८ लक्ष्यते स्म तदनन्तरं रविर्बद्धभीमपरिवेशमण्डलः
वैनतेयशमितस्य भोगिनो भोगवेष्टित इव च्युतो मणिः ५९ श्येनपक्षपरिधूसरालकाः

साध्यमेघरुधिरार्द्रवाससः अंगना इव रजस्वला दिशो नो बभूवुरवलोकनक्षमाः ६० भा
स्करश्च दिशमध्युवास यां तां श्रिताः प्रतिभयं ववासिरे क्षत्रशोणितपितृक्रियोचितं चो
दयंत्य इव भार्गवं शिवाः ६१ तत्प्रतीपपवनादि वैकृतं प्रेक्ष्य शांतिमधिकृत्य कृत्यवि
त् अन्वयुंक्त गुरुमीश्वरः क्षितेः स्वंतमित्यलघयत्स तद्व्यथाम् ६२ तेजसः सपदि रा
शिरुत्थितः प्रादुरास किल वाहिनीमुखे यः प्रमृज्य नयनानि सैनिकैः लक्षणीयपुरु
षाकृतिश्चिरात् ६३ पित्र्यमंशमुपवीतलक्षणं मातृकं च धनुरूर्जितं दधत् यः ससोम
इव घर्मदीधितिः सद्विजिह्व इव चंदनद्रुमः ६४ येन रोषपरुषात्मनः पितुः शासने
स्थितिभिदोपि तस्थुषा वेपमानजननीशिरश्छिदा प्रागजीयत घृणा ततः क्षितिः ६५ अ
क्षबीजवलयेन निर्बभौ दक्षिणश्रवणसंस्थितेन यः क्षत्रियांतकरणैकविंशतेर्व्या
जपूर्वगणनामिवोद्वहन् ६६ तं पितुर्वधभवेन मन्युना राजवंशनिधनाय दीक्षितम् बाल
सूनुरवलोक्य भार्गवं स्वां दशां च विषसाद पार्थिवः ६७ रामनाम इति तुल्यमात्मजे वर्तमा
नमहिते च दारुणे हृद्यमस्य भयदायि चाभवत् रत्नजातमिव हारसर्पयोः ६८ अर्घ्यमर्घ्य
मिति वादिनं नृपं सोनवेक्ष्य भरताग्रजो यतः क्षत्रकोपदहनार्चिषं ततः संदधे दृशमुद
ग्रतारकाम् ६९ तेन कार्मुकनिषक्तमुष्टिना राघवो विगतभीः पुरोगतः अंगुलीविव

स्वारिणं शरं कीर्तितानि जगदे युयुत्सुना ७० क्षत्रजातमपकारवैरि मे तन्निहत्य बहुशः शमं
गतः सुप्तसर्प इव दंडघट्टनाद्रोषितोस्मि तव विक्रमश्रवात् ७१ मैथिलस्य धनुरन्यपार्थि
वैः त्वं किलानमितपूर्वमक्षिणोः तन्निशम्य भवता समर्थये वीर्यशृंगमिव भग्नमात्मनः
७२ अन्यदा जगति राम इत्ययं शब्द उच्चरित एव मामगात् व्रीडमावहति मे स संप्रति
व्यस्तवृत्तिरुदयोन्मुखे त्वयि ७३ बिभ्रतोस्त्रमचलेप्यकुंठितं द्वौ मतौ मम रिपू स मा
समागसौ धेनुवत्सहरणाच्च हैहयः त्वं च कीर्तिमपहर्तुमुद्यतः ७४ क्षत्रियांतक
रणोपि विक्रमः तेन मामवति नाजिते त्वयि पावकस्य महिमा स गण्यते कक्षवज्ज्वल
ति सागरेपि यः ७५ विद्धि चात्तबलमोजसा हरेरैश्वरं धनुरभाजि यत्त्वया खातमूल
मनिलो नदीरयैः पातयत्यपि मृदुस्तटद्रुमम् ७६ तन्मदीयमिदमायुधं ज्यया संगमय्य स
शरं विकृष्यताम् तिष्ठतु प्रधनमेवमप्यहं तुल्यबाहुतरसा जितस्त्वया ७७ कातरोसि यदि
वोद्गतार्चिषा तर्जितः परशुधारया मम ज्यानिघातकठिनांगुलिर्वृथा बध्यतामभयया
चनांजलिः एवमुक्तवति भीमदर्शने भार्गवे स्मितविकंपिताधरः तद्धनुर्ग्रहणमेव राघ
वः प्रत्यपद्यत समर्थमुत्तरम् ७९ पूर्वजन्मधनुषा समागतः सोतिमात्रलघुदर्शनोभव
त् केवलोपि सुभगो नवांबुदः किं पुनस्त्रिदशचापलांछितः ८० तेन भूमिनिहितैककोटि ४४

नौ कार्मुकं च बलिनाधिरोपितम् आपवल्गीविकृतिं च भार्गवं दृष्टिशेषितइववासवध्वजः ८१ तावु
भावपि परस्परस्थितौ वर्द्धमानपरिहीनतेजसौ पश्यति स्म जनता दिनात्यये पार्वणौ शशि
दिवाकराविव ८२ तं कृपामृदुरवेक्ष्य भार्गवं राघवः स्खलितवीर्यमात्मनि स्वं च संहितम
मोघमाशुगं व्याजहारहरसूनुसन्निभः ८३ न प्रहर्तुमलमस्मि निर्दयं विप्र इत्यभि
भवत्यपि त्वयि शास किं गतिमनेन पत्रिणा हन्मि लोकमथ ते मखार्जितम् ८४ प्रत्युवाच त
मृषिर्न तत्त्वतस्त्वां न वेद्मि पुरुषं पुरातनम् गां गतस्य तव धाम वैष्णवं कोपितो ह्यसि मया
दिदृक्षुणा ८५ भस्मसात्कृतवतः पितृद्विषः पात्रसाच्च वसुधां ससागराम् आहितो ज
यविपर्ययोऽपि मे श्लाघ्य एव परमेष्ठिना त्वया ८६ तद्गतिं मतिमतां वरेप्सितां पुण्यतीर्थग
मनाय रक्ष मे पीडयिष्यति न मां खिलीकृता स्वर्गपद्धतिरभोगलोलुपम् ८७ प्रत्यपद्यत तथेति
राघवः प्राङ्मुखश्च विससर्ज सायकम् भार्गवस्य सुकृतोऽपि सोऽभवत् स्वर्गमार्गपरिघो दुर
त्ययः ८८ राघवोऽपि चरणौ तपोनिधेः क्षम्यतामिति वदन् समस्पृशत् निर्जितेषु तरसा तरस्वि
नां शत्रुषु प्रणतिरेव कीर्तये ८९ राजसत्त्वमवधूय मातृकं पित्र्यमस्मि गमितः शमं यदा न
न्वनिन्दितफलो मम त्वया निग्रहोऽप्ययमनुग्रहीकृतः ९० साधयाम्यहमविघ्नमस्तु ते देव
कार्यमुपपादयिष्यतः ऊचिवानिति वचः सलक्ष्मणं लक्ष्मणाग्रजमृषिस्तिरोदधे ९१ पुंग

तस्मिन्गते विजयिनं परिरभ्य रामं स्नेहादमन्यत पिता पुनरेव जातम् तस्याभवत्क्षणशुचः
परितोषलाभः कक्षाग्निलंघिततरोरिव वृष्टिपातः ९२ अथ पथि गमयित्वा कॢप्तरम्यो
पकार्ये कतिचिदवनिपालः शार्वरीः शार्वकल्पः पुरमविशदयोध्यां मैथिलीदर्शिनीनां ॥
कुवलयितगवाक्षां लोचनैरंगनानाम् ९३ इति श्रीरघुवंशे० सार्गवागमनं नाम ए
कादशः सर्गः ११ ॥श्री॥ निर्विष्टविषयस्नेहः स दशान्तमुपेयिवान् आसीदा
सन्ननिर्वाणः प्रदीपार्चिरिवोषसि १ तं कर्णमूलमागत्य रामे श्रीर्न्यस्यतामिति कैकेयी
शंकयेवाह पलितच्छद्मना जरा २ सा पौरान्पौरकान्तस्य रामस्याभ्युदयश्रुतिः प्रत्येकं
ह्लादयांचक्रे कुल्येवोद्यानपादपान् ३ तस्याभिषेकसंभारं कल्पितं क्रूरनिश्चया दू
षयामास कैकेयी शोकोष्णैर्नयनाश्रुभिः ४ सा किलाश्वासिता चंडी भर्त्रा तत्संश्रुतौ व
रौ उद्ववामेन्द्रसिक्ता भूर्बिलमग्नाविवोरगौ ५ तयोश्चतुर्दशैकेन रामं प्राव्राजयत्स
माः द्वितीयेन सुतस्यैच्छद्वैधव्यैकफलां श्रियम् ६ पित्रा दत्तां रुदन्रामः प्राङ्महीं प्र
त्यपद्यत पश्चाद्वनाय गच्छेति तदाज्ञां मुदितोग्रहीत् ७ दधतो मंगलक्षौमे वसानस्य च वल्क ४५
ले ददृशुर्विस्मितास्तस्य मुखरागं समं जनाः ८ स सीतालक्ष्मणसखः सत्याद्गुरुमलो
पयन् विवेश दंडकारण्यं प्रत्येकं च सतां मनः ९ राजापि तद्वियोगार्तः स्मृत्वा शापं स्व

कर्मण्यङ्गशरीरत्यागमात्रेण शुद्धिलाभममन्यत १० विप्रोषितकुमारं तद्राज्यमस्तमिते
श्वरम् रंध्रान्वेषणदक्षाणां द्विषामामिषितां ययौ ११ अथानाथाः प्रकृतयो मातृबंधु
निवासिनम् मौलैरानाययामासुर्भरतं स्तंभिताश्रुभिः १२ श्रुत्वा तथाविधं मृत्युं कै
केयीतनयः पितुः मातुर्न केवलं स्वस्याः श्रियोप्यासीत्पराङ्मुखः १३ ससैन्यश्चा
न्वगाद्रामं दर्शितानाश्रमालयैः तस्य पश्यन् ससौमित्रेरुदश्रुर्वसतिद्रुमान् १४ चित्रकूटव
नस्थं सः कथितस्वर्गतिर्गुरोः लक्ष्म्या निमंत्रयांचक्रे तमनुच्छिष्टसंपदा १५ स हि प्रथमजे
तस्मिन्नकृतश्रीपरिग्रहे परिवेत्तारमात्मानं मेने स्वीकरणाद्भुवः १६ तमशक्यमपाकृष्टुं
निर्देशात् स्वर्गिणः पितुः ययाचे पादुके पश्चात् कर्तुं राज्याधिदेवते १७ स विसृष्टस्तथे
त्युक्त्वा भ्रात्रा नैवाविशत्पुरीम् नंदिग्रामगतस्तस्य राज्यं न्यासमिवाभुनक् १८ दृढभ
क्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः मातुः पापस्य भरतः प्रायश्चित्तमिवाकरोत् १९
रामोपि सह वैदेह्या वने वन्येन वर्त्तयन् चचार सानुजः शान्तो वृद्धेक्ष्वाकुव्रतं युवा २० प्र
भावस्तंभितच्छायमाश्रितः स वनस्पतिं कदाचिदंके सीतायाः शिश्ये किंचिदिव श्र
मात् २१ ऐंद्रिः किल नखैस्तस्या विददार स्तनौ द्विजः प्रियोपभोगचिह्नेषु पौरोभा
ग्यमिवाचरन् २२ तस्मिन्नास्थदिषीकास्त्रं रामो रामावबोधितः आत्मानं मुमुचे तस्मा

देकनेत्रव्ययेन सः २३ रामस्त्वासन्नदेशत्वाद्भरतागमनं पुनः आशंक्योत्सुकसारंगां चित्र
कूटस्थलीं जहौ प्रययावातिथेयेषु वसन्नृषिकुलेषु सः दक्षिणां दिशमृक्षेषु वार्षिकेष्वि
व भास्करः २५ बभौ तमनुगच्छंती विदेहाधिपतेः सुता प्रतिषिद्धापि कैकेय्या लक्ष्मी
रिव गुणोन्मुखी २६ अनुसूयातिसृष्टेन पुण्यगंधेन काननम् सा चकारांगरागेण
पुष्पोच्चलितषट्पदम् २७ संध्याभ्रकपिशस्तत्र विराधो नाम राक्षसः अतिष्ठन्
मार्गमावृत्य रामस्येंदोरिव ग्रहः २८ स जहार तयोर्मध्ये मैथिलीं लोकशोषणः नभो
नभस्ययोर्वृष्टिमवग्रह इवांतरे २९ तं विनिःपिष्य काकुत्स्थौ पुरा दूषयति स्थलीं गं
धेनाशुचिना चेति वसुधायां निचख्नतुः ३० पंचवट्यां ततो रामः शासनात्कुंभज
न्मनः अनपोढस्थितिस्तस्थौ विंध्याद्रिः प्रकृताविव ३१ रावणावरजा तत्र राघवं
मदनातुरा अभिपेदे निदाघार्ता व्यालीव मलयद्रुमम् ३२ सा सीतासन्निधावेव
तं वव्रे कथितान्वया अत्यारूढो हि नारीणामकालज्ञो मनोभवः ३३ कलत्रवान
हं बाले कनीयांसं भजस्व मे इति रामो वृषस्यंतीं वृषस्कंधः शशास ताम् ३४ ज्येष्ठा
भिगमनात्पूर्वं तेनाप्यनभिनंदिता साभूद्रामाश्रया भूयो नदीवोभयकूलभाक्
३५ संरंभं मैथिलीहासः क्षणसौम्यां निनाय तां निवातस्तिमितां वेलां चंद्रोदय इवो

रघोः ३६ फलमस्योपहासस्य सद्यः प्राप्स्यसि पश्य माम् मृग्याः परिभवो व्याघ्र्यां इत्यवे
हि त्वया कृतः ३७ इत्युक्त्वा मैथिलीं भर्त्तुरंके निविशंतीं भयात् रूपं सूर्प्पणखा ना
म्नः सदृशं प्रत्यपद्यत ३८ लक्ष्मणः प्रथमं श्रुत्वा कोकिलामंजुवादिनीम् शिवाघो
रस्वरां पश्चाद्बुबुधे विकृतेति ताम् ३९ पर्णशालामथ क्षिप्रं विकृष्टासिः प्रविश्य सः
×पौ वैरूप्यंनरुक्त्येन भीषणां तामयोजयत् ४० सा वक्रनखधारिण्या वेणुकर्कशपर्व
या अंकुशाकारयांगुल्या तावतर्जयदंबरे ४१ प्राप्य चाशु जनस्थानं खरादिभ्य
स्तथाविधं रामोपक्रममाचख्यौ रक्षःपरिभवं नवम् ४२ उदायुधानापततस्तान् दृप्तान्
प्रेक्ष्य राघवः निदधे विजयाशंसां चापे सीतां च लक्ष्मणे ४४ एको दाशरथिः कामं यातु
धानाः सहस्रशः ते तु यावन्त एवाजौ तावद्वा ददृशे स तैः ४५ असज्जनेन काकुत्स्थः
प्रयुक्तमथ दूषणम् न चक्षमे शुभाचारः सदूषणमिवात्मनः ४६ तं शरैः प्रतिजग्राह
खरत्रिशिरसौ च सः क्रमशस्ते पुनस्तस्य चापात्सममिवोद्ययुः ४७ ते त्रयाणां शि
तैर्बाणैर्यथापूर्वविशुद्धिभिः आयुर्देहातिगैः पीतं रुधिरं तु पतत्रिभिः ४८ तस्मि
न् रामशरोत्कृत्ते बले महति रक्षसाम् उत्थितं ददृशेऽन्यच्च कबंधेभ्यो न किंचन ४९ सा
बाणवर्षिणं रामं योधयित्वा सुरद्विषाम् अप्रबोधाय सुष्वाप गृध्रच्छाये वरूथिनी ५०

×मुखावयवलूनां तां नै
रृता यत्पुरो दधुः राम
भियायिनां तेषां तदेवा
भूदमंगलं ॥४३॥

राघवास्त्रविदीर्णानां रावणं प्रति रक्षसाम् तेषां शूर्पणखैवैका दुःप्रवृत्तिहराभवत् ५
१ निग्रहात्स्वसुराप्तानां वधाच्च धनदानुजः रामेण निहितं मेने पदं दशसु मूर्धसु
५२ रक्षसा मृगरूपेण वंचयित्वा स राघवौ जहार सीतां पक्षीन्द्रप्रयासक्षणविघ्नितः
५३ तौ सीतान्वेषिणौ गृध्रं लूनपक्षमपश्यताम् प्राणैर्दशरथप्रीतेरनृणं कंठवर्ति
तिः स रावणहृतां ताभ्यां वचसाचष्ट मैथिलीम् आत्मनः सुमहत्कर्म व्रणैरावेद्य
संस्थितः ५५ तयोस्तस्मिन्नवीभूतपितृव्यापत्तिशोकयोः पितरीवाग्निसंस्कारात्
परा ववृतिरे क्रियाः ५६ वधनिर्धूतशापस्य कबंधस्योपदेशतः मुमूर्छ सख्यं रामस्य
समानव्यसने हरौ ५७ स हत्वा वालिनं वीरस्तत्पदे चिरकांक्षिते धातोः स्थान इवा
देशं सुग्रीवं संन्यवेशयत् ५८ इतस्ततश्च वैदेहीमन्वेष्टुं भर्तृचोदिताः कपयश्चेरुरार्तस्य
रामस्येव मनोरथाः ५९ प्रवृत्तावुपलब्धायां तस्याः संपातिदर्शनात् सागरं मारुतिस्ती
र्णः संसारमिव निर्ममः ६० प्रवृत्तावुपलब्धायां तस्याः संपातिदर्शनात् जानकी विष
वल्लीभिः परीतेव महौषधिः ६१ तस्यै भर्तुरभिज्ञानमंगुलीयं ददौ हरिः प्रत्युद्गतमि
वानुष्णैस्तदानंदाश्रुबिंदुभिः ६२ निर्वाप्य प्रियसंदेशैः सीतामक्षवधोद्धुरः स ददा ४७
ह पुरीं लंकां क्षणसोढारिनिग्रहः ६३ प्रत्यभिज्ञानरत्नं च रामायादर्शयत्कृती हृदयं

स्वयमायातं वैदेह्या इव मूर्त्तिमत् ६४ स प्राप हृदयन्यस्त मणिस्पर्शनिमीलितः अपयोधरसंसर्गां
प्रियालिंगननिर्वृतिं ६५ श्रुत्वा रामः प्रियोदंतं मेने तत्संगमोत्सुकः महार्णवपरिक्षेपं लंका
याः परिखालघुम् ६६ स प्रतस्थेरिनाशाय हरिसैन्यैरनुद्रुतः न केवलं भुवः पृष्ठे व्योम्नि
संबाधवर्त्मभिः ६७ निविष्टमुदधेः कूले तं प्रपेदे विभीषणः स्नेहाद्राक्षसलक्ष्म्येव बुद्धि
माविश्य चोदितः ६८ तस्मै निशाचरैश्वर्यं प्रतिशुश्राव राघवः काले खलु समारब्धाः फलं
बध्नंति नीतयः ६९ स सेतुं बंधयामास प्लवगैर्लवणांभसि रसातलादिवोन्मग्नं शेषं स्वप्नाय
शार्ङ्गिणः ७० तेनोत्तीर्य पथा लंकां रोधयामास पिंगलैः द्वितीयं हेमप्राकारं कुर्वद्भिरिव वा
नरैः ७१ रणः प्रववृते तत्र भीमः प्लवगरक्षसाम् दिग्विजृंभितकाकुत्स्थपौलस्त्यजयघोष
णः ७२ पादपाविद्धपरिघः शिलानिष्पिष्टमुद्गरः अतिशस्त्रनखन्यासः शैलरुग्णमतंग
जः ७३ युग्मं अथ रामशिरश्छेददर्शनोद्भ्रांतचेतनाम् सीतां मायेति शंसंती त्रिजटा समा
जीवयत् ७४ कामं जीवति मे नाथ इति सा विजहौ शुचम् प्राङ्मत्वा सत्यमस्यांतं जीवि
तास्मीति लज्जिता ७५ गरुडापातविश्लिष्टमेघनादास्त्रबंधनः दाशरथ्योः क्षणक्लेशः स्वप्नवृत्त इवाभवत् स्वप्नवृत्तिमिवाभवत् २
७६ ततो बिभेद पौलस्त्यः शक्त्या वक्षसि लक्ष्मणम् रामस्त्वनाहतोप्यासीद्विदीर्णहृदयः शु
चा ७७ स मारुतिसमानीत महौषधिहतव्यथः लंकास्त्रीणां पुनश्चक्रे विलापाचार्यकं शरैः ७८

नादं स मेघनादस्य धनुश्चेन्द्रायुधप्रभम् मेघस्येव शरत्कालो न किंचित्पर्यशेषयत् ७९ कोशेनम
हतीनिद्रां त्याजितं रणदुर्जयम् रावणः प्रेषयामास सुग्रीवायानुजमात्मनः ८० स भञ्जन्नतदा
देशात् कपीनुग्राननेकशः विवेश च पुरीं लङ्कां समादाय हरीश्वरं ८१ कुंभकर्णः कपीन्द्रेण तुल्
ल्यावस्थः स्वसुः कृतः रुरोध रामं शृङ्गीव टङ्कच्छिन्नमनःशिलः ८२ अकाले बोधितो भ्रात्रा
प्रियस्वप्नो वृथा भवान् रामेषुभिरितीवासौ दीर्घनिद्रां प्रवेशितः ८३ इतराण्यपि रक्षांसि
पेतुर्वानरकोटिषु रजांसि समरोत्थानि तच्छोणितनदीष्विव ८४ निर्ययावथ पौलस्त्यः पुन
र्युद्धाय मन्दिरात् अरावणमरामं वा जगदद्येति निश्चितः ८५ रामं पदातिमालोक्य लङ्केशं
च वरूथिनम् हरियुग्यं रथं तस्मै प्रजिघाय पुरंदरः ८६ तमाधूतध्वजपटं व्योमगङ्गोर्मिवायुभिः
देवसूतभुजालम्बी जैत्रमध्यास्त राघवः ८७ मातलिस्तस्य माहेन्द्रमामुमोच तनुच्छदम् यत्रो
त्पलदलक्लैब्यं शस्त्राण्यापुः सुरद्विषाम् ८८ अन्योन्यदर्शनप्राप्तविक्रमावसरं चिरात् रा
मरावणयोर्वैरं चरितार्थमिवाभवत् ८९ भुजमूर्धोरुबाहुल्यादेकोपि धनदानुजः ददृशे
ऽयथापूर्वो मातृवंश इव स्थितः जेतारं लोकपालानां स्वमुखैरर्चितेश्वरम् रामस्तुलितकै
लासं तमरिं बहु मन्यत ९१ तस्य स्फुरति पौलस्त्यः सीतासंगमशंसिनि निचखानाधिक
क्रोधः शरं सव्येतरे भुजे ९२ रावणस्यापि रामास्तो भित्त्वा हृदयमाशुगः विवेश भुवमाख्या

ख्यातुमुरगेभ्य इव प्रियम् ९३ वचसैव तयोर्वाक्यमस्त्रमस्त्रेण निघ्नतोः अन्योन्यजयसं
रंभो ववृधे वादिनोरिव ९४ विक्रमव्यतिहारेण सामान्याभूद्द्वयोरपि जयश्रीरन्तरा वेदिर्मत्त
वारणयोरिव ९५ कृतप्रतिकृतप्रीतैस्तयोर्मुक्तां सुरासुरैः परस्परशरव्राताः पुष्पवृष्टिं
न सेहिरे ९६ अयःशंकुचितां रक्षः शतघ्नीमथ शत्रवे हृतां वैवस्वतस्येव कूटशाल्म
लिमक्षिपत् ९७ राघवो रथमप्राप्तां तामाशां च सुरद्विषां अर्धचंद्रमुखैर्बाणैश्चिच्छेद क
दलीमिव ९८ अमोघं संदधे रामो धनुष्येकधनुर्धरः ब्राह्ममस्त्रं प्रियाशोकशल्यनिकर्ष
णौषधम् ९९ तद्व्योम्नि शतधा भिन्नं ददृशे दीप्तिमन्मुखम् वपुर्महोरगस्येव करालफ
णमंडलम् १०० तेन मंत्रप्रयुक्तेन निमेषार्धादपातयत् रामो रिपुशिरःपंक्तिमज्ञातव्र
णवेदनाम् १ बालार्कप्रतिमेवाप्सु वीचिभिन्ना पतिष्यतः रराज रक्षःकायस्य कंठच्छेदप
रंपरा २ मरुतां पश्यतां तस्य शिरांसि पतितान्यपि मनो नातिविशश्वासुः पुनःसंधानशंकिनाम्
३ अथ मदगुरुपक्षैर्लोकपालद्विपानामनुगतमलिवृन्दैर्गंडभित्तीर्विहाय उपनतमणिबं
धे मूर्ध्नि पौलस्त्यशत्रोः सुरभि सुरविमुक्तं पुष्पवर्षं पपात ४ यंता हरेः सपदि संहृतकार्मु
कज्यमापृच्छ्य राघवमनुष्ठितदेवकार्यम् नामांकरावणशरांकितकेतुयष्टिमूर्ध्वं रथं हरि
सहस्रयुक्तं निनाय ५ रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियां प्रियसुहृदि बिभीषणे संक्र

म्यग्श्रियं वैरिणः रविसुतसहितेन तेनानुयातः ससौमित्रिणा भुजविजितविमानरत्नाधिरू-
ढः प्रतस्थे पुरीं ६६॥ इतिश्रीरघुवंशे महाकाव्ये श्री० रावणवधो नाम द्वादशः सर्गः॥१२
॥९०॥ अथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः रत्नाकरं वीक्ष्य मिथः स-
जायां रामाभिधानो हरिरित्युवाच १ वैदेहि पश्यामलयाद्विभक्तं मत्सेतुना फेनिलमंबुराशि-
म् छायापथेनेव शरत्प्रसन्नमाकाशमाविष्कृतचारुतारम् २ गुरोर्यियक्षोः कपिलेन मेध्ये
रसातलं संक्रमिते तुरंगे तदर्थमुर्वीमवदारयद्भिः पूर्वैः किलायं परिवर्द्धितो नः ३ गर्भं
दधत्यर्कमरीचयोस्मात् विवृद्धिमत्राश्नुवते वसूनि अबिंधनं वह्निमसौ बिभर्ति प्रह्लादनं ज्यो-
तिरजन्यनेन ४ तां तामवस्थां प्रतिपद्यमानं स्थितं दशव्याप्य दिशो महिम्ना विष्णोरिवास्यान-
वधारणीयम् ईदृक्तया रूपमियत्तया वा ५ नाभिप्ररूढांबुरुहासनेन संस्तूयमानः प्रथमे-
न धात्रा अमुं युगांतोचितयोगनिद्रः संहृत्य लोकान्पुरुषोधिशेते ६ पक्षच्छिदा गोत्रभि-
दात्तगंधाः शरण्यमेनं शतशो महीध्राः नृपा इवोपप्लविनः परेभ्यो धर्मोत्तरं मध्यममाश्रयं-
ते ७ रसातलादादिभवेन पुंसा भुवः प्रयुक्तोद्वहनक्रियायाः अस्याच्छमंभः प्रलयप्रवृद्धं ४८
मुहूर्तवक्त्राभरणं बभूव ८ मुखार्पणेषु प्रकृतिप्रगल्भाः स्वयं तरंगाधरदानदक्षः अ-
नन्यसामान्यकलत्रवृत्तिः पिबत्यसौ पाययते च सिंधूः ९ ससत्वमादाय नदीमुखांभः

संमीलयंतो विवृताननत्वम् अमी शिरोभिस्तिमयः सरंध्रैरूर्द्ध्वं वितन्वंति जलप्रवाहान् १० मा
तंगनक्रैः सहसोत्पतद्भिर्भिन्नान् द्विधा पश्य समुद्रफेनान् कपोलसंसर्पितया य एषां व्रजं
ति कर्णक्षणचामरत्वम् ११ वेलानिलाय प्रसृता भुजंगा महोर्मिविस्फूर्जथुनिर्विशेषाः
सूर्यांशुसंपर्कसमृद्धरागैर्व्यज्यंत एते मणिभिः फणस्थैः १२ तवाधरस्पर्द्धिषु विद्रुमेषु प
र्यस्तमेतत्सहसोर्मिवेगात् ऊर्द्ध्वांकुरप्रोतमुखं कथंचित् क्लेशादपक्रामति शंखयूथम् १
३ प्रवृत्तमात्रेण पयांसि पातुमावर्तवेगाद्भ्रमता घनेन आभाति भूयिष्ठमयं समुद्रः प्रम
थ्यमानो गिरिणेव भूयः १४ दूरादयश्चक्रनिभस्य तन्वी तमालतालीवनराजिनीला
आभाति वेला लवणांबुराशेर्धारानिबद्धेव कलंकरेखा १५ वेलानिलः केतकरेणुभिस्ते
संभावयत्याननमायताक्षि मामक्षमं मंडनकालहानेर्वेत्तीव बिंबाधरबद्धतृष्णम् १६ एते वयं
सैकतभिन्नशुक्तिपर्यस्तमुक्तापटलं पयोधेः प्राप्ता मुहूर्त्तेन विमानवेगात् कूलं फलावर्जि
तपूगमालम् १७ कुरुष्व तावत्करभोरु पश्चान् मार्गे मृगप्रेक्षिणि दृष्टिपातम् एषा विदूरीभव
तः समुद्रात्सकानना निष्पततीव भूमिः १८ क्वचित्पथा संचरते घनानां क्वचित्खगानां म
रुतां क्वचिच्च यथाविधो मे मनसोऽभिलाषः प्रवर्तते पश्य तथा विमानम् १९ असौ महेंद्र
द्विपदानगंधिस्त्रिमार्गगावीचिविमर्दशीतः आकाशवायुर्दिनयौवनोत्था नाचामति स्वे

दत्तवानस्युखेक्षे २० करेण वातायनलंबितेन स्पृष्टस्त्वया चंडि कुतूहलिन्या आमुंचतीवाभरणं
द्वितीयमुद्भिन्नविद्युद्वलयो घनस्ते २१ अमी जनस्थानमपोढविघ्नं मत्वा समारब्धनवोटजानि
अध्यासते चीरभृतो यथास्वं चिरोज्झितान्याश्रममंडलानि २२ सैषा स्थली यत्र विचिन्वता
त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम् अदृश्यत त्वच्चरणारविंदविश्लेषदुःखादिव बद्धमौन
म् २३ त्वं रक्षसा भीरु यतोपनीता तं मार्गमेताः कृपया लता मे अदर्शयन्वक्तुमशक्नु
वंत्यः शाखाभिरावर्जितपल्लवाभिः २४ मृग्यश्च दर्भांकुरनिर्व्यपेक्षास्तवागतिज्ञं
समबोधयन्माम् व्यापारयंत्यो दिशि दक्षिणस्यामुत्पक्ष्मराजीनि विलोचनानि २५
तद्गिरेर्माल्यवतः पुरस्तादाविर्भवत्यंबरलेखि शृंगं नवं पयो यत्र घनैर्मया च त्वद्विप्रयोगा
श्रु समं विसृष्टम् २६ गंधश्च धाराहतपल्वलानां कादंबमर्द्धोद्गतकेसरं च स्निग्धाश्च।
केकाः शिखिनां बभूवुः यस्मिन्नसह्यानि विना त्वया मे २७ पूर्वानुभूतं स्मरता च यत्रा
कंपोत्तरं भीरु तवोपगूढम् गुहाविसारीण्यतिवाहितानि मया कथंचिद्घन
गर्जितानि २८ आसारसिक्तक्षितिबाष्पयोगान्मामक्षिणोद्यत्र विभिन्नकोशैः। ५०
विडंब्यमाना नवकंदलैस्ते विवाहधूमारुणलोचनश्रीः २९ उपांतवानीरवनोपगूढा
न्यालक्ष्यपारिप्लवसारसानि दूरावतीर्णा पिबतीव खेदादमूनि पंपासलिलानि दृष्टिः

३० अत्रावियुक्तानि रथांगनाम्ना मन्योन्यदत्तोत्पलकेसराणि द्वंद्वानि दूरांतरवर्तिना ते मया
प्रिये सस्पृहमीक्षितानि ३१ इमां तटाशोकलतां च तन्वीं स्तनाभिरामस्तबकाभिनम्राम् त्वत्
प्राप्तिबुद्ध्या परिरिप्सुमानः सौमित्रिणा साश्रुरहं निषिद्धः ३२ अमूर्विमानांतरलंबिनी
नां श्रुत्वा स्वनं कांचनकिंकिणीनाम् प्रत्युद्व्रजंतीव खमुत्पतंत्यो गोदावरीसारसपंक्त
यस्त्वाम् ३३ एषा त्वयापेशलमध्ययापि घटांबुसंवर्द्धितबालचूता आनंदयत्युन्मुख
कृष्णसारा दृष्टा चिरात्पंचवटी मनो मे ३४ अत्रानुगोदं मृगयानिवृत्तस्तरंगवातेन विनीत
खेदः रहस्त्वदुत्संगनिषण्णमूर्द्धा स्मरामि वानीरगृहेषु सुप्तम् ३५ भ्रूभेदमात्रेण पदान्मघो
नः प्रभ्रंशयां यो नहुषं चकार तस्याविलांभःपरिशुद्धिहेतोर्भौमो मुनेः स्थानपरिग्रहोय
म् ३६ त्रेताग्निधूमाग्रमनिंद्यकीर्त्तेस्तस्येदमाक्रांतविमानमार्गम् घ्रात्वा हविर्गंधिरजोविमुक्तः
समश्नुते मे लघिमानमात्मा ३७ एतन्मुनेर्मानिनि शातकर्णेः पंचाप्सरो नाम विहारवारि आभा
ति पर्यंतवनं विदूरान्मेघांतरालक्ष्यमिवेंदुबिंबम् ३८ पुरा सदर्भांकुरमात्रवृत्तिश्चरन् मृ
गैः सार्द्धमृषिर्मघोना समाधिभीतेन किलोपनीतः वियद्गतः पुष्पकचंद्रशालाः क्षणं प्रति
श्रुन्मुखराः करोति ४० हविर्भुजामेधवतां चतुर्णां मध्ये ललाटंतपसप्तसप्तिः असौ तप
स्यत्यपरस्तपस्वी नाम्ना सुतीक्ष्णश्चरितेन दांतः ४१ अमुं सहासप्रहितेक्षणानि व्याजार्द्ध
संदर्शितमेखलानि नालं विकर्तुं जनितेंद्रशंकं सुरांगनाविभ्रमचेष्टितानि ४२ एषोक्षमा

रघुवंशकाव्यस्य त्रे
५२

लावलयं मृगाणां कंडूयितारं कुशसूचिलावम् सभाजने मे भुजमूर्द्धबाहुः सव्येतरं प्राध्वमितः प्र
युंक्ते ४३ वाचंयमत्वात्प्रणतिं ममैषः कंपेन किंचित्प्रतिगृह्य मूर्द्धः दृष्टिं विमानव्यवधानमुक्तां
पुनः सहस्रार्चिषि संनिधत्ते ४४ अदः शरण्यं शरभंगनाम्नः तपोवनं पावनमाहिताग्नेः चिरा
य संतर्प्य समिद्भिरग्निं यो मंत्रपूतां तनुमप्यहौषीत् ४५ छाया विनीताध्वपरिश्रमेषु भूयिष्ठसं
भाव्यफलेष्वमीषु तस्यातिथीनामधुना सपर्या स्थिता सुपुत्रेष्विव पादपेषु ४६ धारास्वनोद्गा
रिदरीमुखोसौ शृंगाग्रलग्नांबुदवप्रपंकः बध्नाति मे बंधुरगात्रि चक्षुः दृप्तः ककुद्मानिव चा
चित्रकूटः ४७ एषा प्रसन्नस्तिमितप्रवाहा सरिद्विदूरांतरभावतन्वी मंदाकिनी भाति नगोप
कंठे मुक्तावली कंठगतेव भूमेः ४८ अयं सुजातोनुगिरं तमालः प्रवालमादाय सुगंधि यस्य
यवांकुरापांडुकपोलशोभी मयावतंसः परिकल्पितस्ते ४९ अनिग्रहत्रासविनीतसत्वमपु
ष्पलिंगात्फलबंधिवृक्षं तपः साधनमेतदत्रेराविष्कृतोदग्रतरप्रभावम् ५० अत्राभिषेकाय
तपोधनानां सप्तर्षिहस्तोद्धृतहेमपद्माम् प्रवर्तयामास किलानसूया त्रिस्रोतसं त्र्यंबकमौ
लिमालाम् ५१ वीरासनैर्ध्यानजुषामृषीणाममी समाध्यासितवेदिमध्याः निवातनिष्कंपत
या विभांति योगाधिरूढा इव शाखिनोपि ५२ त्वया पुरस्तादुपयाचितो यः सोयं वटः श्या
म इति प्रकाशः राशिर्मणीनामिव गारुडानां सपद्मरागः फलितो विभाति ५३ क्वचित्प्रभा ५१
लिपिभिरिंद्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा अन्यत्र माला सितपंकजानामिंदीवरैरुत्खचि

तांतरेव ५४ क्वचित्खगानां प्रियमानसानां कादंबसंसर्गवतीव पंक्तिः अन्यत्र कालागुरुदत्तप
त्रा भक्तिर्भुवश्चंदनकल्पितेव ५५ क्वचित्प्रभा चांद्रमसी तमोभिः छायाविलीनैः शबलीकृतेव अ
न्यत्र शुभ्रा शरदभ्रलेखा रंध्रेष्विवालक्ष्यनभःप्रदेशाः ५६ नितांतशुद्धस्फटिकावयोगात् वैदू
र्यकांत्या रसनाव जीव गंगा स्वरात्मजाया समेत्य पुष्णत्युदारं परभागमेषा ५७ वज्रालिकत्वकर्म
तमिश्रया शुक्लनिशेव लीला कुंदस्रगिंदीवरमालयेव कृष्णेतरैः कृष्णमृगत्वचेव द्युतिः स्मरा
रेरिव कंबलासा ५८ इत्यपाइयाशारदमेघलेखा निर्हेतिनिसर्गशशुचादि देव गवाक्षकालागुरु
धूमराज्या हर्म्यस्थलीलेयसुधानवेव ५९ तुषारसंघातशिलाहिमाद्रेः कांत्यांजनप्रस्तरशो
लयेव पतत्त्रिणां मानसगोचराणां श्रेणीव कादंबविहंगपंक्त्या ६० क्वचित्कृष्णोरगभूषणे
व भस्मांगरागा तनुरीश्वरस्य पश्यानवद्यांगि विभाति गंगा भिन्नप्रवाहा यमुनातरंगैः ६१ क्रम
कम समुद्रपत्न्योर्जलसंनिपाते पूतात्मनामत्र किलाभिषेकात् तत्त्वावबोधेन विनापि भूयः स्तनुत्यजां
नास्ति शरीरबंधः ६२ पुरं निषादाधिपतेरिदं तद्यस्मिन्मया मौलिमणिं विहाय जटासु बद्धास्वरुद
न्सुमंत्रः कैकेयि कामाः फलितास्तवेति ६३ पयोधरैः पुण्यजनांगनानां निर्विष्टहेमांबुजरेणुय
स्याः ब्राह्मं सरः कारणमाप्तवाचो बुद्धेरिवाव्यक्तमुदाहरंति ६४ जलानि या तीरनिखातयूपैः
र्वहत्ययोध्यामनुराजधानीं तुरंगमेधावभृथावतीर्णैः रिक्ष्वाकुभिः पुण्यतरीकृतानि ६५ यां सै
कतोत्संगसुखोचितानां ग्राम्यैः पयोभिः परिवर्धितानां सामान्यधात्रीमिव मानसं मे संभावयत्युत्तरकोश

लानाम् ६६ सेयं मदीया जननीव तेन मान्येन राज्ञा सरयूर्वियुक्ता दूरेपि सन्तं शिशिरानिलैर्मां तरंगहस्तैरु
५२ पगूहतीव ६७ कलकम् विरक्तसंध्यापरुषं पुरस्ताद्यतो रजः पार्थिवमुज्जिहीते शंके हनूमत्कथित
प्रवृत्तिः प्रत्युद्गतो मां भरतः ससैन्यः ६८ अद्धा श्रियं पालितसंगराय प्रत्यर्पयिष्यत्यनघां स साधुः हत्वा
निवृत्ताय मृधे खरादीन् संरक्षितां त्वामिव लक्ष्मणो मे ६९ असौ पुरस्कृत्य गुरुं पदातिः पश्चादवस्थापि
तवाहिनीकः वृद्धैरमात्यैः सह चीरवासा मामर्घ्यपाणिर्भरतोऽभ्युपैति ७० पित्रा विसृष्टां मदपेक्षया
यः श्रियं युवाप्यंकगतामभोक्ता इयंति वर्षाणि तया सहोग्रमभ्यस्यतीव व्रतमासिधारम् ७१ ए
तावदुक्तवति दाशरथौ तदीयामिच्छां विमानमधिदेवतया विदित्वा ज्योतिःपथादवततार सविस्मयाभिरु
द्वीक्षितं प्रकृतिभिर्भरतानुगाभिः ७२ तस्मात्पुरः सरविभीषणदर्शितेन सेवाविचक्षणहरीश्वर
दत्तहस्तः यानादवातरददूरमहीतलेन मार्गेण भंगिरचितस्फटिकेन रामः ७३ इक्ष्वाकुवंश
गुरवे प्रयतः प्रणम्य स भ्रातरं भरतमर्घ्यपरिग्रहान्ते पर्यश्रुरस्वजत मूर्ध्नि चोपजघ्रौ तद्भक्त्यपोढपितृराज्यमहा
भिषेके ७४ श्मश्रुप्रवृद्धिजनिताननविक्रियांश्च प्लक्षान्प्ररोहजटिलानिव मन्त्रिवृद्धान् अन्वग्रही
त्प्रणमतः शुभदृष्टिदानैर्वार्तानुयोगमधुराक्षरया च वाचा ७५ दुर्जातबंधुरयमृक्षहरीश्वरो मे
पौलस्त्य एष समरेषु पुरःप्रहर्ता इत्यादृतेन कथितौ रघुनन्दनेन व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥
७६ सौमित्रिणा तदनु संससृजे स चैनमुत्थाप्य नम्रशिरसं भृशमालिलिंग रूढेन्द्रजित्प्रहरणव्रणकर्क ५९
शेन क्लिश्यन्निवास्य भुजमध्यमुरःस्थलेन ७७ रामाज्ञया हरिचमूपतयस्तदानीं कृत्वा मनुष्यवपुरारुरुहुर्ग

शैंशान् येषु ज्वरस्तुबकस्य मदवारिसिक्ताः शैलाधिरोहणसुखान्युपलेभिरे ते ७८ सावग्रहः स्वतुरपि
ऋणदाशरथं तेजोरथं दशरथप्रभवानुशिष्टम् मायाविकल्परचितै रपि ये तदीयैः न स्यंदनैस्तुलितंस
त्रिमभक्तिशोभाः ७९ भूयस्ततो रघुपतिर्विलसत्पताकम् अध्यास्त कामगति सावरजो विमानम् दो
षातनं बुधबृहस्पतियोगदृश्यस्तारापतिस्तरलविद्युदिवाभ्रवृंदम् ८० तत्रेश्वरेण जगतां प्रलया
दिवोर्वीं वर्षात्यये न स्त्वममल्ययनादिदैवः रामेण मैथिलसुतां दशकंठकृच्छ्रात् प्रत्युद्धृतां धृतिमतीं
भरतो ववंदे ८१ लंकेश्वरप्रणयसंग दृढव्रतं तद्वंद्यं युगं चरणयो र्जनकात्मजायाः ज्येष्ठानुवृत्ति
जटिलं च शिरोस्य साक्षाद्रन्योन्यपावनमभूदुभयं समेत्य ८२ क्रोशार्धं प्रकृतिपुरस्सरेण गत्वा का
कुत्स्थस्तिमितजवेन पुष्पकेन शत्रुघ्नप्रतिविहितोपकार्यमार्यः साकेतोपवनमुदारमध्युवास ८३
इति श्री रघुवंशे महाकाव्ये समुद्रवर्णनो नाम त्रयोदशः सर्गः समाप्तः १३ ॥१९९०॥ भर्तुः प्रणाशा
दथ शोचनीयं दशांतरं तत्र समं प्रपन्ने अपश्यतां दाशरथी जनन्यौ छेदादिवोपघ्नतरोर्व्रतत्यौ १ उभा
वुभाभ्यां प्रणतौ हतारी यथाक्रमं विक्रमशोभिनौ तौ विस्पष्टमस्रांधतया न दृष्टौ ज्ञातौ सुतस्पर्श
सुखोपलंभात् २ आनंदजः शोकजमश्रुबाष्पस्तयोरशीतं शिशिरो बिभेद गंगासरय्वोर्जलमुष्ण
तप्तं हिमाद्रिनिःस्यंद इवावतीर्णः ३ ते पुत्रयोर्नैरृतशस्त्रमार्गान् आर्द्रानिवांगे सदयं स्पृशंत्यौ
अपीप्सितं क्षत्रकुलांगनानां न वीरसूशब्दमकामयेताम् ४ क्लेशावहा भर्तुरलक्षणाहं सीतेति नाम

मस्वमुदीरयंती स्वर्गप्रतिष्ठस्य गुरोर्महिष्यावभक्तिभेदेन वधूर्ववंदे ५ उत्तिष्ठ वत्से ननु सानुजोसौ वृत्ते
न भर्ता शुचिना तवैव कृच्छ्रं महत्तीर्ण इति प्रियार्हां तामूचतुस्ते प्रियमप्यमिथ्या ६ अथाभिषेकं रघु
वंशकेतोः प्रारब्धमानंदजलैर्जनन्योः निर्वर्तयामासुरमात्यवृद्धाः तीर्थाहृतैः कांचनकुंभतोयैः
७ सरित्समुद्रान्सरसीश्च गत्वा रक्षःकपींद्रैरुपपादितानि तस्यापतन्मूर्ध्नि जलानि जिष्णोर्विंध्य
स्य मेघप्रभवा इवापः ८ तपस्विवेषक्रिययापि तावद्यः प्रेक्षणीयः सुतरां बभूव राजेंद्रनेपथ्य
विधानशोभा तस्योदितासीत्पुनरुक्तदोषा ९ समौलरक्षोहरिभिः ससैन्यस्तूर्यस्वनानंदितपौ
रवर्गः विवेश सौधोद्गतलाजवर्षामुत्तोरणामन्वयराजधानीम् १० सौमित्रिणा सावरजेन मं
दमाधूतबालव्यजनो रथस्थः धृतातपत्रो भरतेन साक्षादुपायसंघात इव प्रवृद्धः ११ प्रासा
दकालागुरुधूमराजिस्तस्याः पुरो वायुवशेन भिन्ना वनान्निवृत्तेन रघूत्तमेन मुक्ता स्वयं वेणि
रिवाबभासे १२ श्वश्रूजनानुष्ठितचारुवेषाम् कर्णीरथस्थां रघुवीरपत्नीं प्रासादवातायनदृ
श्यबंधैः साकेतनार्योंजलिभिः प्रणेमुः १३ स्फुरत्प्रभामंडलमानुसूयं सा बिभ्रती शाश्वत
मंगरागम् ररंज शुद्धेति पुनः स्वपुर्यै संदर्शिता वह्निगतेव भर्त्रा १४ वेश्मानि रामः परिबर्ह ५२
वंति विश्राण्य सौहार्दनिधिः सुहृद्भ्यः बाष्पायमानो बलिमन्निकेतमालेख्यशेषस्य पितुर्विवेश १५
कृतांजलिस्तत्र यदंब सत्यान्नाभ्रश्यत स्वर्गफलाद्गुरुर्नः तच्चिंत्यमानं सुकृतं तवेति जहार लज्जां

त्रतस्पृशातः १६ तथा च सुग्रीवविभीषणादीनुपाचरत्कृत्रिमसंविधाभिः संकल्पमात्रोदित
सिद्धयस्ते क्रांता यथा चेतसि विस्मयेन १७ सभाजनायोपगतान्स दिव्यान्मुनीन्पुरस्कृत्य हतस्य श
त्रोः शुश्राव तेभ्यः प्रभवादि वृत्तं स्वविक्रमे गौरवमादधानः १८ प्रतिप्रयातेषु तपोधनेषु सुखादवि
ज्ञातगतार्धमासान् सीतास्वहस्तोपहृताग्र्यपूजान् रक्षःकपींद्रान्विससर्ज रामः १९ त
च्चात्मचिंतासुलभं विमानं हृतं सुरारेः सह जीवितेन कैलासनाथोद्वहनाय भूयः पुष्पं दिवः पुष्पक
मन्वमंस्त २० पितुर्नियोगाद्वनवासमेवं निस्तीर्य रामः प्रतिपन्नराज्यः धर्मार्थकामेषु समां प्रपेदे य
था तथैवावरजेषु वृत्तिम् २१ सर्वासु मातृष्वपि वत्सलत्वात्स निर्विशेषप्रतिपत्तिरासीत् षडानना
पीतपयोधरासु नेता चमूनामिव कृत्तिकासु २२ तेनार्थवाँल्लोभपराङ्मुखेन तेन घ्नता वि
घ्नभयं क्रियावान् तेनास लोकः पितृमान्विनेत्रा तेनैव शोकापनुदेन पुत्री २३ स पौरकार्याणि स
मीक्ष्य काले रेमे विदेहाधिपतेर्दुहित्रा उपस्थितश्चारुवपुस्तदीयं कृत्वोपभोगोत्सुकयेव लक्ष्म्या
२४ तयोर्यथाप्रार्थितमिंद्रियार्थानासेदुषोः सद्मसु चित्रवत्सु प्राप्तानि दुःखान्यपि दंडकेषु
संचिंत्यमानानि सुखान्यभूवन् २५ अथाधिकस्निग्धविलोचनेन मुखेन सीता शरपांडुरेण आ
नंदयित्री परिणेतुरासीदनक्षरव्यंजितदोहदेन २६ तामंकमारोप्य कृशांगयष्टिं वर्णांतराक्रां
तपयोधराग्राम् विलज्जमानां रहसि प्रतीतः पप्रच्छ रामां रमणोभिलाषम् २७ सा दृष्टनीवारब

निर्दिष्टसैः संबद्धवैखानसकन्यकानि इयेष भूयः कुशवंति गंतुं भागीरथीतीरतपोवनानि २८ तस्यै
प्रतिश्रुत्य रघुप्रवीरस्तदीप्सितं पार्श्वचरानुयातः आलोकयिष्यन्मुदितामयोध्यां प्रासादम
भ्रंलिहमारुरोह २९ ऋद्धापणं राजपथं स पश्यन् विगाह्यमानां सरयूं च नौभिः विलासि
भिश्चाध्युषितानि पौरैः पुरोपकंठोपवनानि रेमे ३० स किंवदंतीं वदतां पुरोगः स्ववृत्तमुद्दिश्य
विशुद्धवृत्तः सर्पाधिराजोरुभुजोपसर्पं पप्रच्छ भद्रं विजितारिभद्रः ३१ निर्बंधपृष्टः स ज
गाद सर्वं स्तुवंति पौराश्चरितं त्वदीयम् अन्यत्र रक्षोभवनोषिताया परिग्रहान्मानवदेव
देव्याः ३२ कलत्रनिंदागुरुणा किलैवमभ्याहतं कीर्तिविपर्ययेण अयोघनेनाय इवा
भितप्तं वैदेहिबंधोर्हृदयं विदद्रे ३३ किमात्मनिर्वादकथामुपेक्षे जायामदोषामुत संत्यजा
मि इत्येकपक्षाश्रयविक्लवत्वादासीत्स दोलाचलचित्तवृत्तिः ३४ निश्चित्य चानन्यनिवृत्तिवा
च्यं त्यागेन पत्न्याः परिमार्ष्टुमैच्छत् अपि स्वदेहात्किमुतेंद्रियार्थाद्यशोधनानां हि यशो ग
रीयः ३५ स संनिपात्यावरजान्हतौजास्तद्विक्रियादर्शनलुप्तहर्षान् कौलीनमात्माश्रय
माचचक्षे तेभ्यः पुनश्चेदमुवाच वाक्यम् ३६ राजर्षिवंशस्य रविप्रसूतेरुपस्थितः पश्यत की ५४
दृशोयं मत्तः सदाचारशुचेः कलंकः पयोदवातादिव दर्पणस्य ३७ पौरेषु सोहं बहुलीभ
वंतमपां तरंगेष्विव तैलबिंदुम् सोढुं न तत्पूर्वमवर्णमीशे आलानिकं स्थाणुमिव द्विपेंद्रः ३८

तस्यापनोदाय फलप्रवृत्तावुपस्थितायामपि निर्व्यपेक्षः त्यक्ष्यामि वैदेहसुतां पुरस्तात्समुद्रनेमिं
पितुराज्ञयेव ३९ अवैमि चैनामनघेति किंतु लोकापवादो बलवान्मतो मे छाया हि भूमेः शशिनो मल
त्वेनारोपिता शुद्धिमतः प्रजाभिः ४० रक्षोवधांतो न च मे प्रयासः व्यर्थः स वैरप्रतिमोचनाय अमर्षणः
शोणितकांक्षया किं पदा स्पृशंतं दशति द्विजिह्वः ४१ तदेष सर्गः करुणार्द्रचित्तैर्न मे भवद्भिः प्रतिषे
धनीयः यद्यर्थिता निर्हृतवाच्यशल्यान्प्राणान्मया धारयितुं चिरं वः ४२ इत्युक्तवंतं जनकात्मजायां नि
तांतरूक्षाभिनिवेशमीशम् न कश्चन भ्रातृषु तेषु शक्तो निषेद्धुमासीदनुमोदितुं वा ४३ स लक्ष्मणं लक्ष्मण
पूर्वजन्मा विलोक्य लोकत्रयगीतकीर्तिः सौम्येति चाभाष्य यथार्थभाषः स्थितं निदेशे पृथगादिदेश
४४ प्रजावती दोहदशंसिनी ते तपोवनेषु स्पृहयालुरेव स त्वं रथी तद्व्यपदेशनेयां प्रापय्य वाल्मीकिप
दं त्यजैनाम् ४५ स शुश्रुवान्मातरि भार्गवेण पितुर्नियोगात्प्रहृतं द्विषद्वत् प्रत्यग्रहीदग्रजशासनं
तदाज्ञा गुरूणां ह्यविचारणीया ४६ अथानुकूलश्रवणप्रतीतामत्रस्नुभिर्युक्तधुरं तुरंगैः रथं सुमंत्र
प्रतिपन्नरश्मिमारोप्य वैदेहसुतां प्रतस्थे ४७ सा नीयमाना रुचिरान्प्रदेशान् प्रियंकरो मे प्रिय इ
त्यनंदत् नाबुद्ध कल्पद्रुमतां विहाय जातं तमात्मन्यसिपत्रवृक्षम् ४८ जुगूह तस्याः पथि लक्ष्मणो
यत् सव्येतरेण स्फुरता तदक्ष्णा आख्यातमस्यै गुरुभाविदुःखमत्यंतलुप्तप्रियदर्शनेन ४९ सा दु
र्निमित्तोपगताद्विषादात् सद्यः परिम्लानमुखारविंदा राज्ञः शिवं सावरजस्य भूयादित्याशंसे कर

णैरबाहैः ५० ।गुरोर्निदेशादपितां वनांते साध्वीं सुमित्रातनयो विहास्यन् अवार्यतेवोछ्रितवीचि
हस्तै र्जन्हो र्दुहित्रा स्थितया पुरस्तात् ५१ रथात्स यंत्रा निगृहीतवाहात् तां भ्रातृजायां पुलिने
वतार्य गंगां निषादाहृतनौविशेष स्ततार संधामिव सत्यसंधः ५२ अथ व्यवस्थापितवाक्क
थंचित् सौमित्रिरंतर्गलबाष्पकंठः औत्पातिकं मेघ इवाश्मवर्षं महीपतेः शासनमुज्जगा
र ५३ ततोभिषंगानिलविप्रविद्धा प्रभ्रस्यमानाभरणप्रसूना स्वमूर्तिलाभप्रकृतिं धरित्रीं
लतेव सीता सहसा जगाम ५४ इक्ष्वाकुवंशप्रभवः कथं त्वां त्यजेदकस्मात्पतिरार्यवृ
त्तिः इति क्षितिः संशयितेव तस्यै ददौ प्रवेशं जननी न तावत् ५५ सा लुप्तसंज्ञा न विवेद
दुःखं प्रत्यागतासुः समतप्यतांतः तस्याः सुमित्रात्मजयत्नलब्धो मोहादभूत्कष्टतरः प्रबोधः
५६ न सावदद्भर्तुरवर्णमार्या निराकरिष्णो र्वृजिनादृतेपि आत्मानमेव स्थिरदुःखभाजं पु
नः पुनर्दुःकृतिनं निनिंद ५७ आश्वास्य रामावरजः सतीतां माख्यातवाल्मीकिनिकेतमार्गः निघ्न
स्य मे भर्तृनिदेशरौक्ष्यं देवि क्षमस्वेति बभूव नम्रः ५८ सीता तमुत्थाप्य जगाद वाक्यं प्रीतास्मि
ते सौम्य चिराय जीव बिडौजसा विष्णुरिवाग्रजेन भ्रात्रा यदित्थं परवानसि त्वम् ५९ श्वश्रूजनं स ५५
र्वमनुक्रमेण विज्ञापय प्रापितमत्प्रणामः प्रजानिषेकं मयि वर्तमानं सूनोरनुध्यायत चेतसेति ६०
वाच्यस्त्वया मद्वचनात्स राजा वह्नौ विशुद्धामपि यत्समक्षम् मां लोकवादश्रवणादहासीः श्रुत

स्य किं तत्सदृशं कुलस्य ६१ कल्याणबुद्धेरथवा तवायं न कामचारो मयि शंकनीयः ममैव जं
न्मांतरपातकानां विपाकविस्फूर्जथुरप्रसह्यः ६२ उपस्थितां पूर्वमपास्य लक्ष्मीं वनं मया
सार्द्धमसि प्रपन्नः त्वयास्पदं प्राप्य तया तु रोषात् सोढास्मि न त्वद्भवने वसंती ६३ निशाचरोप
प्लुतभर्तृकाणां तपस्विनीनां भवतः प्रसादात् भूत्वा शरण्या शरणार्थमन्यं कथं प्रपत्स्ये त्व
यि दीप्यमाने ६४ किं वा तवात्यंतवियोगमोघे कुर्यामुपेक्षां हतजीविते स्मिन् स्याद्रक्षणी
यं यदि मे न तेजः त्वदीयमंतर्गतमंतरायः ६५ साहं तपः सूर्यनिविष्टदृष्टिः ऊर्द्ध्वं प्रसूतेश्चरितुं
यतिष्ये भूयो यथा मे जननांतरेपि त्वमेव भर्त्ता न च विप्रयोगः ६६ नृपस्य वर्णाश्रमपालनं य
त् स एव धर्मो मनुना प्रणीतः निर्वासिताप्येवमतस्त्वयाहं तपस्विसामान्यमवेक्षणीया ६७ ।
तथेति तस्याः प्रतिगृह्य वाचं रामानुजे दृष्टिपथं व्यतीते सा मुक्तकंठं व्यसनातिभाराच्चक्रं
द विग्ना कुररीव भूयः ६८ नृत्यं मयूराः कुसुमानि वृक्षाः दर्भानुपात्तान् विजहुर्हरिण्यः
तस्याः प्रपन्ने समदुःखभावमत्यर्थमासीद्रुदितं वनेपि ६९ तामभ्यगच्छद्रुदितानुसारी कविः कु
शेध्माहरणाय यातः निषादविद्धांडजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः ७० ।
तमश्रुनेत्रावरणं प्रमृज्य सीता विलापाद्विरता ववंदे तस्यै मुनिर्दोहदलिंगदर्शी दत्वा सुपुत्राशिषमि
त्युवाच ७१ जाने विसृष्टां प्रणिधानतस्त्वां मिथ्यापवादक्षुभितेन भर्त्रा तन्मा व्यथिष्ठा विषयांतरस्थं

प्राप्तासि वैदेहि पितुर्निकेतम् ७२ उत्खातलोकत्रयकण्टकेऽपि सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि त्वां
प्रत्यकस्मात्कलुषप्रवृत्तावस्त्येव मन्युर्भरताग्रजे मे ७३ तवोरुकीर्तिः श्वशुरः सखा मे स
तां भवोच्छेदकरः पिता ते धुरि स्थिता त्वं पतिदेवतानां किं तन्न येनासि ममानुकम्प्या ७४
तपस्विसंसर्गविनीतसत्त्वे तपोवने वीतभया वसास्मिन् इतो भविष्यत्यनघप्रसूतेरपत्य
संस्कारमयो विधिस्ते ७५ अशून्यतीरां मुनिसंनिवेशैस्तमोपहन्त्रीं तमसां वगाह्य तत्सैक
तोत्सङ्गबलिक्रियाभिः संपत्स्यते ते मनसः प्रमोदः ७६ पुष्पं फलं चार्तवमाहरन्त्यो बीजं
च बालेयमकृष्टरोहि विनोदयिष्यन्ति नवाभिषङ्गामुदारवाचो मुनिकन्यकास्त्वाम् ७७
पयोघटैराश्रमबालवृक्षान् संवर्धयन्ती स्वबलानुरूपैः असंशयं प्राक्तनयोपपत्तेः स्तनंधयप्रीतिमवाप्स्य
सि त्वम् ७८ अनुग्रहप्रत्यभिनन्दिनीं तां वाल्मीकिरादाय दयार्द्रचेताः सायं मृगाध्यासितवेदिपार्श्वं
स्वमाश्रमं शान्तमृगं निनाय॥ ७९ तामर्पयामास च शोकदीनां तदागमप्रीतिषु तापसीषु
निर्विष्टसारां पितृभिर्हिमांशोरन्त्यां कलां दर्श इवौषधीषु ८० ताइङ्गुदीस्नेहकृतप्रदीपमास्ती
र्णमेध्याजिनतल्पमन्तः तस्यै सपर्यानुपदं दिनान्ते निवासहेतोरुटजं वितेरुः ८१ तत्राभि ५६
षेकप्रयता वसन्ती प्रयुक्तपूजा विधिनातिथिभ्यः वन्येन सा वल्कलिनी शरीरं पत्युः प्रजा
संततये बभार ८२ अपि प्रभुः सानुशयोऽधुना स्यादित्युत्सुकः शक्रजितोऽपि हन्ता शशंस

सीतां परं देवतां तां मनुष्टितं शासनमग्रजाय ८३ बद्धवरामः सहसा सबाष्पः॰ कं स्वयमेव धीमान्
वर्णाश्रमावेक्षणजागरूकः सभ्रातृसाधारणभोगमृद्धं राज्यं रजोरिक्तमनाः शशास ८५
तामेकभार्यां परिवादभीरोः साध्वीमपि त्यक्तवतो नृपस्य वक्षस्यसंघट्टसुखं वसंती रेमे सपत्नी
रतिवेव लक्ष्मीः ८६ सीतां हित्वा दशमुखरिपुर्नोपयेमे यदन्यां तस्या एव प्रतिकृतिसखो
यत्क्रतूनाजहार वृत्तांतेन श्रवणविषयप्रापिणा तेन भर्तुः सा दुर्वारं कथमपि परित्यागदुः
खं विषेहे ८७ इति श्रीरघुवंशे महाकाव्ये श्रीका॰ सीतापरित्यागो नाम चतुर्दशः सर्गः १४
कृतसीतापरित्यागः स रत्नाकरमेखलाम् बुभुजे पृथिवीपालः पृथिवीमेव केवलाम् १ लवणे
न विलुप्तेज्या तामिस्रेण तमभ्ययुः मुनयो यमुनाभाजः शरण्यं शरणार्थिनः २ अवेक्ष्य रामं ते ता
स्मिन्न प्रजह्रुः स्वतेजसा त्राणाभावे हि शापास्त्राः कुर्वंति तपसो व्ययं ३ प्रतिशुश्राव काकुत्स्थस्तेभ्यो
विघ्नप्रतिक्रियां धर्मसंरक्षणार्थैव प्रवृत्तिर्भुवि शार्ङ्गिणः ४ ते रामाय वधोपायमाचख्युर्विबुधद्विषः
दुर्जयो लवणः शूली विशूलः प्रार्थ्यतामिति ५ आदिदेशाथ शत्रुघ्नं तेषां क्षेमाय राघवः करिष्य
न्निव नामास्य यथार्थमरिनिग्रहात् ६ यः कश्चन रघूणां हि परमेकः परंतपः अपवाद इवोत्सर्गं
व्यावर्तयितुमीश्वरः ७ अग्रजेन प्रयुक्ताशीस्ततो दाशरथी रथी ययौ वनस्थलीः पश्यन् पु
ष्पिताः सुरभीरभीः ८ रामादेशादनुगता सेना तस्यार्थसिद्धये पश्चादध्ययनार्थस्य धातोरधिरि

॰स्तुषारवर्षीव सहस्यचन्द्रः
कौलीनभीतेन गृहान्निरस्ता
न तेन वैदेहसुता मनस्तः ८
४ निगृह्यशो॰ [illegible]

वासवत् ९ आदिष्टवर्त्मा मुनिभिः स गच्छंस्तपतां वरः विरराज रथप्रष्ठैर्वालखिल्यैरिवांशुमा
न् १० तस्य मार्गवशादेका बभूव वसतिर्यतः रथस्वनोत्कीर्णमृगे वाल्मीकीये तपोवने ११ त
मृषिः पूजयामास कुमारं क्लांतवाहनम् तपःप्रभावसिद्धाभिर्विशेषप्रतिपत्तिभिः १२ तस्
यामेवास्य यामिन्यामंतर्वत्नी प्रजावती सुतावसूत संपन्नौ कोशदंडाविव क्षितिः १३ संता
नश्रवणाद्भ्रातुः सौमित्रिः सौमनस्यवान् प्रांजलिर्मुनिमामंत्र्य प्रातर्युक्तरथो ययौ १४ स च प्रा
प मधूपघ्नं कुंभीनस्याश्च कुक्षिजः वनात्करमिवादाय सत्वराशिमुपस्थितः १५ धूमधू
म्रो वसागंधी ज्वालाबभ्रुशिरोरुहः क्रव्याद्गणपरीवारश्चिताग्निरिव जंगमः १६ अपशू
लं तमासाद्य लवणं लक्ष्मणानुजः रुरोध संमुखीनो हि जयो रंध्रप्रहारिणाम् १७
नातिपर्याप्तमालक्ष्य मत्कुक्षेरद्य भोजनम् दिष्ट्या त्वमसि मे धात्रा भीतेनेवोपपादितः १८ इति सं
तर्ज्य शत्रुघ्नं राक्षसस्तज्जिघांसया प्रांशुमुत्पाटयामास मुस्तास्तंबमिव द्रुमम् १९॥
सौमित्रेर्निशितैर्बाणैरंतराशकलीकृतः गात्रं पुष्परजः प्राप न शाखी नैरृतेरितः २० विना ५७
शात्तस्य वृक्षस्य रक्षस्तस्मै महोपलं प्रजिघाय कृतांतस्य मुष्टिं पृथगिव स्थितम् २१ ऐंद्रम
स्त्रमुपादाय शत्रुघ्नेन स ताडितः सिकतात्वादपि परां प्रपेदे परमाणुताम् २२ तमुपाद्रवदुद्य
म्य दक्षिणं दो निनायत्तुवः कंपं जहाराश्रमवासिनाम् २४ वयसां पंक्तयः पेतुर्हतस्योपरि

ऽसा तत्प्रतिद्वंद्विनो मूर्ध्नि दिव्याः दिव्याः कुसुमवृष्टयः २५ स हत्वा लवणं वीरस्तदा मेने महौ
जसः भ्रातुः सोदर्यमात्मानः मिंद्रजिद्वधशोभिनः २६ तस्य संस्तूयमानस्य चरितार्थैस्तप
स्विभिः शुशुभे विक्रमोदग्रं व्रीडयावनतं शिरः २७ उपकूलं स कालिंद्याः पुरीं पौरुषभूष
णः निर्ममे निर्ममोऽर्थेषु मथुरां मधुराकृतिः २८ या सौराज्यप्रकाशाभिर्बभौ पौरविभूति
भिः स्वर्गाभिष्यंदवमनं कृत्वेव विनिवेशिता २९ तत्र सौधगतः पश्यन् यमुनां चक्रवाकिनी
म् हेमभक्तिमतीं भूमेः प्रवेणीमिव पिप्रिये ३० सखा दशरथस्यापि जनकस्य च मंत्रकृ
त् संचस्कारोभयप्रीत्या मैथिलेयौ यथाविधिः ३१ स तौ कुशलवोन्मृष्टगर्भक्लेदौ त
दाख्यया कविः कुशलवावेव चकार किल नामतः ३२ सांगं च वेदमध्याप्य किंचिदुत्क्रांतशै
शवौ स्वकृतिं गापयामास कविः प्रथमपद्धतिम् ३३ इतरेऽपि रघोर्वंश्यास्त्रयस्त्रेताग्नितेजसः
तद्योगात्पतिवत्नीषु पत्नीष्वासन्द्विसूनवः ३४ शत्रुघातिनि शत्रुघ्नः सुबाहौ च बहुश्रुते मथुरा
विदिशे सून्वोर्निदधे पूर्वजोत्सुकः ३५ भूयस्तपोव्ययो मा भूद्वाल्मीकेरिति सोऽत्यगात् मैथिलीतन
योद्गीतनिःस्पंदमृगमाश्रमम् ३६ वशी विवेश चायोध्यां रथ्यासंस्कारशोभिनीम् लवणस्य वधा
त्पौरैरधिगौरवमीक्षितः ३७ स ददर्श सभामध्ये सभासद्भिरुपासितम् रामं सीतापरित्यागाद
सामान्यपतिं भुवः ३८ तमभ्यनंदत्प्रणतं लवणांतकमग्रजः कालनेमिवधात्प्रीतः तुराषाडिव

शार्ङ्गिणम् ३९ स पृष्टः सर्वतो वार्त्तामाख्यद्राज्ञे न संततिम् प्रत्यर्पयिष्यतः काले कवेराद्यस्य
शासनात् ४१ अथ जानपदो विप्रः शिशुमप्राप्तयौवनम् अवतार्यांकशय्यास्थं द्वारि चक्रन्द भू
पतेः ४२ शोचनीयासि वसुधे या त्वं दशरथाच्च्युता रामहस्तमनुप्राप्ता कष्टात्कष्टतरं गता ४३ श्रुत्वा
तस्य शुचो हेतुं गोप्ता जिह्राय राघवः न ह्यकालभवो मृत्युरिक्ष्वाकुपदमस्पृशत् ४४ स मुहूर्त्तं क्षमस्व
ेति द्विजमाश्वास्य दुःखितम् यानं सस्मार कौबेरं वैवस्वतजिगीषया ४४ आत्तशस्त्रस्तदध्या
स्य प्रस्थितः स रघूद्वहः उच्चचार पुरस्तास्य गूढरूपा सरस्वती ४५ राजन्प्रजासु ते कश्चिदपचा
रः प्रवर्त्तते । तमन्विष्य प्रशमयेर्भविता सि ततः कृती ४६ इत्याप्तवचनाद्रामो विनेष्यन्वर्णविक्रिया
म् दिशः पपात पत्रेण वेगनिष्कंपकेतुना ४७ अथ धूमाभिताम्राक्षं वृक्षशाखावलंबिनम् ददर्श
कंचिदैक्ष्वाकस्तपस्यंतमधोमुखम् ४८ पृष्टनामान्वयो राज्ञा स किलाचष्ट धूमपः आत्मानं शंबु
कं नाम शूद्रं सुरपदार्थिनम् ४९ तपस्यनधिकारित्वात्प्रजानां तमघावहं शीर्षच्छेद्यं परिच्छिद्य नियं
ता शस्त्रमाददे ५० स तद्वक्त्रं हिमक्लिष्टकिंजल्कमिव पंकजं ज्योतिःकणाहतश्मश्रु कंठनाला
दपातयत् ५१ कृतदंडः स्वयं राज्ञा लेभे शूद्रः सतां गतिं तपसा दुश्चरेणापि न स्वमार्गविलंघिना ५८
५२ रघुनाथोप्यगस्त्येन मार्गसंदर्शितात्मना महौजसा संयुयुजे शरत्काल इवेंदुना ५३ कुंभयो
निरलंकारं तस्मै दिव्यपरिग्रहम् ददौ दत्तं समुद्रेण पीतेनेवात्मनिःक्रयम् ५४ तं दधन्मैथिलीकंठ

निर्मायिरेण बाकुना पश्चाल्लिक्ष्वते रामः प्राक्परासुर्द्विजात्मजः ५५ तस्य पूर्वोदितां निंदां द्विजः
पुत्रः समागतः स्तुत्या निवर्त्तयामास त्रातुर्वैवस्वतादपि ५६ तमध्वराय मुक्ताश्वं रक्षः कपिनरेश्व
राः मेघाः शस्यमिवांभोभिरभ्यवर्षन्नुपायनैः ५७ दिग्भ्यो निमंत्रिताश्चैनमभिजग्मुर्महर्षयः न
भौमान्येव धिष्ण्यानि हित्वा ज्योतिर्मयान्यपि ५८ उपशल्यनिविष्टैस्तैश्चतुर्द्वारमुखी बभौ अयो
ध्या सृष्टलोकेव सद्यः पैतामही तनुः ५९ श्लाघ्यस्त्यागोपि वैदेह्याः पत्युः प्राग्वंशवासिनः अ
नन्यजानेर्यस्यासीत्सैव जाया हिरण्मयी ६० विधेरधिकसंभारस्ततः प्रववृते मखः आ
सन् यत्र क्रियाविघ्ना राक्षसा एव रक्षिणः ६१ अथ प्राचेतसोपज्ञं रामायणमितस्ततः मैथि
लेयौ कुशलवौ जगतुर्गुरुनोदितौ ६२ वृत्तं रामस्य वाल्मीकेः कृतिस्तौ किंनरेश्वरौ किंत
द्येन मनोहर्तुमलं स्यातां न शृण्वताम् ६३ रूपे गीते च माधुर्यं तयोस्तज्ज्ञैर्निवेदितम् ददर्श
सानुजो रामः शुश्राव च कुतूहली ६४ तद्गीतश्रवणैकाग्रा संसदश्रुमुखी बभौ हिमनिस्यंदि
नी प्रातर्निर्वातेव वनस्थली ६५ वयोवेषविसंवादि रामस्य च तयोस्तदा जनता प्रेक्ष्य सादृश्यं
वीक्ष्यापन्ना व्यतिष्ठत ६६ उभयोर्न तथा लोकः प्रावीण्येन विसिस्मिये नृपतेः प्रीतिदानेषु वी
तस्पृहतया यथा ६७ गेये केन विनीतौ वां कस्य चेयं कृतिः कवेः इति राज्ञा स्वयं पृष्टौ तौ
वाल्मीकिमशंसतां ६८ अथ सावरजो रामः प्राचेतसमुपेयिवान् ऊरीकृत्यात्मनो देहं राज्यम

सोन्ववेदयत् ६९ स तावाख्याय रामाय मैथिलेयौ तदात्मजौ कविः कारुणिको वव्रे सीतायाः
संपरिग्रहं।७० तात शुद्धा समक्षं नः स्नुषा ते जातवेदसि दौरात्म्याद्रक्षसस्तां तु नात्रत्याः
श्रद्दधुः प्रजाः ७१ ताः स्वचारित्रमुद्दिश्य प्रत्याययतु मैथिली ततः पुत्रवतीमेनां प्रतिपत्स्ये त्वया
ज्ञया।७२ इति प्रतिश्रुते राज्ञा जानकीमाश्रमान्मुनिः शिष्यैरानाययामास स्वसिद्धिं नियमै।
रिव ७३। अन्येद्युः रथ काकुत्स्थः सन्निपात्य पुरौकसः कविमाह्वाययामास प्रस्तुतप्रतिप
त्तये ७४ स्वरसंस्कारवत्या च पुत्राभ्यां सह सीतया ऋचेवोदर्चिषं सूर्यं रामं मुनिरुपस्थितः।
७५ काषायपरिवीतेन स्वपादार्पितचक्षुषा अन्वमीयत शुद्धेति शान्तेन वपुषैव सा ७६ जन
स्तदालोकपथात्प्रतिसंहृतचक्षुषः तस्थुस्तेऽवाङ्मुखाः सर्वे फलिता इव शालयः ७७ तां दृष्टिवि
षये भर्तुर्मुनिरास्थितविष्टरः कुरु निःसंशयं वत्से स्ववृत्ते जनमित्यशात् ७८ अथ वाल्मी
किशिष्येण पुण्यमावर्जितं पयः आचम्योदीरयामास सीता सत्यां सरस्वतीम् ७९ वाङ्
मनःकर्मभिः पत्यौ व्यभिचारो यथा न मे तथा विश्वंभरे देवि मामन्तर्धातुमर्हसि ८० एवमु
क्ते तया साध्व्या रन्ध्रात्सद्यो भवाद्भुवः शातह्रदमिव ज्योतिः प्रभामण्डलमुद्ययौ ८१ तत्र नाग ५९
फणोत्क्षिप्तसिंहासननिषेदुषी समुद्ररशना साक्षात्प्रादुरासीद्वसुंधरा ८२ सा सीतामं
कमारोप्य भर्तृप्रणिहितेक्षणाम् मा मेति व्याहरत्येव तस्मिन्पातालमभ्यगात् ८३ धरायां त।

स संरंभं सीताप्रत्यर्पणैषिणः गुरुर्विधिबलापेक्षी शमयामास धन्विनः ८४ ऋषीन्विसृज्य यज्ञा
न्ते सुहृदश्च पुरस्कृतान् रामः सीतागतं स्नेहं निदधे तदपत्ययोः ८५ युधाजितश्च संदेशात्स देशं
सिंधुनामकम् ददौ दत्तप्रभावाय भरताय धृतप्रजः ८६ भरतस्तत्र गंधर्वान्युधि निर्जित्य
केवलम् आतोद्यं ग्राहयामास समत्याजयदायुधम् ८७ स तक्षपुष्कलौ पुत्रौ राजधान्योस्त
दाख्ययोः अभिषिच्याभिषेकार्हौ रामांतिकमगात्पुनः ८८ अंगदं चंद्रकेतुं च लक्ष्मणोऽप्या
त्मसंभवौ शासनाद्रघुनाथस्य चक्रे कारापथेश्वरौ ८९ समारोपितपुत्रास्ते जननीनां ज
ननीनां जनेश्वराः भर्तृलोकप्रपन्नानां निवापान्विदधुः क्रमात् ९० उपेत्य मुनिवेषेण कालः प्रो
वाच राघवं रहः संवादिनौ पश्येदावां यस्तं त्यजेरिति ९१ तथेति प्रतिपन्नाय विवृतात्मा नृपा
य सः आचख्यौ दिवमध्यास्व शासनात्परमेष्ठिनः ९२ विद्वानपि तयोर्द्वाःस्थः समयं लक्ष्मणो
ऽभिनत् भीतो दुर्वाससः शापात् रामसंदर्शनार्थिनः ९३ स गत्वा सरयूतीरं देहत्यागेन योगवि
त् चकारावितथां भ्रातुः प्रतिज्ञां पूर्वजन्मनः ९४ तस्मिन्नात्मचतुर्भागे प्राङ्नाकमधितस्थुषि
राघवः शिथिलं तस्थौ भुवि धर्मस्त्रिपादिव ९५ स निवेश्य कुशावत्यां रिपुनागांकुशं कुशम्
शरावत्यां सतां सूक्तैर्जनिताश्रुलवं लवम् ९६ उदक्प्रतस्थे स्थिरधीः सानुजोऽग्निपुरःसरः
अन्वितः पतिवात्सल्याद्गृहवर्जमयोध्यया ९७ जगृहुस्तस्य चित्तज्ञाः पदवीं हरिर

ह्रसाः कदंबमुकुलस्थूलैरभिवृष्टां प्रजाश्रुभिः ९८ उपस्थितविमानेन तेन सक्ताकंपिना चक्रे त्रिदिव
निःश्रेणिः सरयूरनुयायिनाम् ९९ यज्जोप्रतरकल्पोद्भूत् संमर्द्दस्तत्र मज्जताम् अनस्तदाख्य
यातीर्थं पावनं भुवि पप्रथे १०० सविभुर्विबुधांशेषु प्रतिपन्नात्ममूर्त्तिषु त्रिदशीभूतपौराणां
स्वर्गांतरमकल्पयत् १ निर्वर्त्यैवं दशमुखशिरश्छेदकार्यं सुराणां विष्वक्सेनः स्वतनुमवि
शत्सर्वलोकप्रतिष्ठाम् लंकानाथं पवनतनयं चोभयं स्थापयित्वा कीर्तिस्तंभद्वयमिव गिरौ दक्षि
णे चोत्तरे च २ इति श्री रघुवंशे महाकाव्ये श्री० स्वर्गारोहणं नाम पंचदशः सर्गः १५ अथेत
रे सप्त रघुप्रवीराः ज्येष्ठं पुरोजन्मतया गुणैश्च चक्रुः कुशं रत्नविशेषभाजं सौभ्रात्रमेषां हि
कुलानुसारि १ ते सेतुवार्त्तागजबंधमुख्यैरभ्युच्छ्रिताः कर्मभिरप्यबंध्यैः अन्योन्यदेशप्रवि
भागसीमां वेलां समुद्रा इव न व्यतीयुः २ चतुर्भुजांशप्रभवः स तेषां दानप्रवृत्तेरनुपारतानाम्
सुरद्विपानामिव सामयोनिर्भिन्नोऽष्टधा विप्रससार वंशः ३ अथार्द्धरात्रे स्तिमितप्रदीपे शय्यागृ
हे सुप्तजने प्रबुद्धः कुशः प्रवासस्थकलत्रवेषामदृष्टपूर्वां वनितामपश्यत् ४ सा साधुसाधार ६०
णपार्थिवर्द्धेः स्थित्वा पुरस्तात्पुरुहूतभासः जेतुः परेषां जयशब्दपूर्वं तस्यांजलिं बंधुमतो ब
बंध ५ तां चानपोढार्गलमप्यगारं छायामिवादर्शतलं प्रविष्टाम् सविस्मयो दाशरथेस्तनू
जः प्रोवाच पूर्वार्धविसृष्टतल्पः ६ लब्धांतरा सावरणेऽपि गेहे योगप्रभावो न च लक्ष्यते ते बि

र्षि चाकारमनिर्वृतानां मृणालिनी हैममिवोपरागम् ७ का त्वं शुभे कस्य परिग्रहो वा किं वा मदभ्याग
मकारणं ते आचक्ष्व मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति ८ तमब्रवीत्सा गुरुणा
नवद्या या नीतपौरा स्वपदोन्मुखेन तस्याः पुरः संप्रति वीतनाथां जानीहि राजन्नधिदेवतां
माम् ९ वस्वौकसारामभिभूय साहं सौराज्यबद्धोत्सवया विभूत्या समग्रशक्तौ त्वयि सूर्य
वंश्ये सति प्रपन्ना करुणामवस्थाम् १० विशीर्णतल्पाट्टशतो निवेशः पर्यस्तशालः प्रभुणा वि
ना मे विडम्बयत्यस्तनिमग्नसूर्यं दिनान्तमुग्रानिलभिन्नमेघं ११ निशासु भास्वत्कलनूपुराणां
यः संचरोऽभूदभिसारिकाणाम् नदन्मुखोल्काविचितामिषाभिः स वाह्यते राजपथः शिवा
भिः १२ आस्फालितं यत्प्रमदाकराग्रैर्मृदङ्गधीरध्वनिमन्वगच्छत् वन्यैरिदानीं महिषैस्त
दम्भः शृङ्गाहतं क्रोशति दीर्घिकाणाम् १३ वृक्षेशया यष्टिनिवासभङ्गात् मृदङ्गशब्दापगमाद
लास्याः प्राप्ता दवोल्काहतशेषबर्हाः क्रीडामयूरा वनबर्हिणत्वम् १४ सोपानमार्गेषु च येषु
रामा निक्षिप्तवत्यश्चरणान्सरागान् सद्यो हतन्यङ्कुभिरस्रदिग्धं व्याघ्रैः पदं तेषु निधीय
ते मे १५ चित्रद्विपाः पद्मवनावतीर्णाः करेणुभिर्दत्तमृणालभङ्गाः नखाङ्कुशाघातवि
भिन्नकुम्भाः संरब्धसिंहप्रहृतं वहन्ति १६ स्तम्भेषु योषित्प्रतियातनानामुत्क्रान्तवर्णक्र
मधूसराणां स्तनोत्तरीयाणि भवन्ति सङ्गात् निर्मोकपट्टाः फणिभिर्विमुक्ताः ॥१७ कालान्त

रश्यामसुधेषु नक्तमितस्ततो रूढतृणांकुरेषु । त एव मुक्तागुणशुद्धयोपि हर्म्येषु मूर्छंति न चंद्रपादाः १८
आवर्ज्य शाखाः सदयं च यासां पुष्पाण्युपात्तानि विलासिनीभिः वन्यैः पुलिंदैरिव वानरैस्ताः
क्लिश्यंत उद्यानलता मदीयाः १९ रात्रावनाविःकृतदीपभासः कांतामुखश्रीवियुता दिवापि
तिरस्क्रियंते कृमितंतुजालै र्विछिन्नधूपप्रसरा गवाक्षाः २० बलिक्रियावर्जितसैकतानि स्ना
नीयसंसर्गमनाप्नुवंति उपांतवानीरगृहाणि दृष्ट्वा शून्यानि दूये सरयूजलानि २१ तदर्हसी
मां वसतिं विसृज्य मामभ्युपेतं कुलराजधानीम् हित्वा तनुं कारणमानुषीं तां यथा गुरुस्ते
परमात्ममूर्तिम् २२ तथेति तस्याः प्रणयं प्रतीतः प्रत्यग्रहीत्प्राग्रहरो रघूणां पूरप्यभिव्य
क्तमुखप्रसादा शरीरबंधेन तिरोबभूव २३ तदद्भुतं संसदि रात्रिवृत्तं प्रातर्द्विजेभ्यो नृप
तिः शशंस श्रुत्वा त एनं कुलराजधान्याः साक्षात्पतित्वे वृतमभ्यनंदन् २४ कुशावतीं श्रोत्रिय
सात्स कृत्वा यात्रानुकूलेऽहनि सावरोधः अनुद्रुतो वायुरिवाभ्रवृंदैः सैन्यैरयोध्याभिमुखः
प्रतस्थे २५ सा केतुमालोपवना बृहद्भि र्विहारशैलानुगतेव नागैः सेना रथोदारगृहा प्रयाणे त
स्याभवज्जंगमराजधानी २६ तेनातपत्रामलमंडलेन प्रस्थापितः पूर्वनिवासभूमिं बभौ बलौघः ६१
शशिनोदितेन वेलामुदन्वानिव नीयमानः २७ तस्य प्रयातस्य वरूथिनीनां पीडामपर्याप्त
वतीव सोढुं वसुंधरा विष्णुपदं द्वितीयमध्यारुरोहेव रजश्छलेन २८ उद्यच्छमाना गमनाय

पश्चात् पुरो निवेश्य पथि व्रजंती सा यच्च सेना ददृशे नृपस्य तत्रैव सामग्र्यमतिं चकार २९
तस्य द्विपानां मदवारिसेकात् खुराभिघाताच्च तुरंगमाणां रेणुः प्रपेदे पथि पंकभावं पंकोपि
रेणुत्वमियाय नेतुः ३० मार्गैषिणी सा कटकांतरेषु विंध्यस्य सेना वहुधा विभिन्ना।
चकार रेवेव महाविरावा बद्धप्रतिश्रुंति गुहामुखानि ३१ सधातुभेदारुणयाननेमिः प्रभुः
प्रयाणध्वनिमिश्रतूर्यः व्यलंघयद्विंध्यमुपायनानि पश्यन् पुलिंदैरुपपादितानि ३२॥
तीर्थे तदीये गजसेतुबंधात् प्रतीपगामुत्तरतोस्य गंगाम् अयत्नबालव्यजनीबभूवुर्हंसा
नभोलंघनलोलपक्षाः ३३ स पूर्वजानां कपिलेन रोषात् भस्मावशेषीकृतविग्रहाणां सुराल
यप्राप्तिनिमित्तमंभस्त्रैस्रोतसं नौलुलितं ववंदे ३४ इत्यध्वनः कैश्चिदहोभिरंते तीरं समासाद्य कु
शः सरय्वाः वेदिप्रतिष्ठान्वितताध्वराणां यूपानपश्यच्छतशो रघूणाम् ३५ आधूय शाखाः कु
सुमद्रुमाणां स्पृष्ट्वा च सीतान् सरयूतरंगान् तं क्लांतसैन्यं कुलराजधान्याः प्रत्युज्जगामोपव
नांतवायुः ३६ अथोपशल्ये रिपुमग्नशल्यस्तस्याः पुरः पौरसखः स राजा कुलध्वजस्तानि च
लध्वजानि निवेशयामास बली बलानि ३७ तां शिल्पिसंघाः प्रभुणा नियुक्तास्तथागतां संभृ
तसाधनत्वात् पुरं नवीचक्रुरपां विसर्गान्मेघा निदाघग्लपितामिवोर्वीम् ३८ ततः सपर्यां सि
पशूपहारां पुरः परार्ध्यप्रतिमागृहायाः उपोषितैर्वास्तुविधानविद्भिर्निर्वर्तयामास रघु

प्रवीरः ३९ तस्याः स राजोपपदं निशांतं कामीव कांताहृदयं प्रविश्य यथार्हमन्यैरनुजीवलो
कं संभावयामास यथाप्रधानम् ४० सा मंदुरासंश्रयिभिस्तुरंगैः शालाविधिस्तंभगते
श्च नागैः पुराबभासे विपणिस्थपण्या सर्वांगनद्धाभरणेव नारी ४१ वसन्स तस्यां वसतौ र
घूणां पुराणशोभामधिरोपितायाम् न मैथिलेयः स्पृहयां बभूव भर्त्रे दिवो नाप्यलकेश्व
राय ४२ अथास्य रत्नग्रथितोत्तरीयमेकांतपांडुस्तनलंबिहारम् निःश्वासहार्यांशुक
माजगाम घर्मः प्रियावेषमिवोपदेष्टुम् ४३ अगस्त्यचिह्नादयनात्समीपं दिगुत्तरा भा
स्वति संनिवृत्ते आनंदशीतामिव बाष्पवृष्टिं हिमस्रुतिं हैमवती ससर्ज ४४ प्रवृद्धतापो दिवसो
ऽतिमात्रमत्यर्थमेव क्षणदा च तन्वी उभौ विरोधक्रियया विभिन्नौ जायापती सानुशयाविवास्ताम्
४५ दिने दिने शैवलवंत्यधस्तात्सोपानपर्वाणि विमुंचदंभः उद्दंडपद्मं गृहदीर्घिकाणां नारी
नितंबद्वयसं बभूव ४६ वनेषु सायंतनमल्लिकानां विजृंभणोद्गंधिषु कुड्मलेषु प्रत्येकनि
क्षिप्तपदः सशब्दं संख्यामिवैषां भ्रमरश्चकार ४७ स्वेदानुविद्धार्द्रनखक्षतांके भूयिष्ठसं
दष्टशिखं कपोले च्युतं न कर्णादपि कामिनीनां शिरीषपुष्पं सहसा पपात ४८ यंत्रप्रवा
हैः शिशिरैः परीतान् रसेन धौतान् मलयोद्भवस्य शिलाविशेषानधिशय्य निन्युः धारागृ ६२
हेष्वातपमृद्धिमंतः ४९ स्नानार्द्रमुक्तेष्वनुधूपवासं विन्यस्तसायंतनमल्लिकेषु कामो वसंता

तस्यां मदीयैः केशेषु लेभे बलमंगनानाम् ५० आपिंजराबद्धरजःकणत्वान्मंजर्युदारारुरु
चेऽर्जुनस्य दष्ट्वापि देहं गिरिशेन रोषात् खंडीकृता ज्येव मनोभवस्य ५१ मनोज्ञगंधं सहकारभंगं
पुराणसीधुं नवपाटलं च संबध्नता कामिजनेषु दोषाः सर्वे निदाघावधिना प्रमृष्टाः ५२
जनस्य तस्मिन् समये विगाढे बभूवतुर्द्वे सविशेषकांते तापापनोदक्षमपादसेवः स दो
दयस्था नृपतिः शशी च ५३ अथोर्मिलोलोन्मदराजहंसे रोधोलतापुष्पवहे सरय्वाः वि
हर्तुमिच्छा वनितासखस्य तस्यांभसि ग्रीष्मसुखे बभूव ५४ स तीरभूमौ विहितोपकार्यामा
नायिभिस्तामपकृष्टनक्राम् विगाहितुं श्रीमहिमानुरूपं प्रचक्रमे चक्रधरप्रभावः ५५ सा
तीरसोपानपथावतारादन्योन्यकेयूरविघट्टिनीभिः सनूपुरक्षोभपदाभिरासीदुद्विग्न
हंसा सरिदंगनाभिः ५६ परस्पराभ्युक्षणतत्पराणां तासां नृपो मज्जनरागदर्शी नौसंश्रयः पा
र्श्वगतां किरातीमुपात्तबालव्यजनां बभाषे ५७ पश्यावरोधैः शतशो मदीयैर्विगाह्यमानो ग
लितांगरागैः संध्योदयः साभ्र इवैष वर्णं पुष्यत्यनेकं सरयूप्रवाहः ५८ विलुप्तमंतःपुरसुं
दरीणां यदंजनं नौलुलिताभिरद्भिः तद्बध्नतीभिर्मदरागशोभां विलोचनेषु प्रतिमुक्तमासा
म् ५९ एता गुरुश्रोणिपयोधरत्वादात्मानमुद्वोढुमशक्नुवंत्यः गाढांगदैर्बाहुभिरप्सु बालाः
क्लेशोत्तरं रागवशात्प्लवंते ६० अमी शिरीषप्रसवावतंसाः प्रभ्रंशिनो वारिविहारिणीनां पा

रिलवाः श्रोतसि निम्नगायाः शैवाललोलां छलयंति मीनान् ६१ आसां जलास्फालनतत्पराणां मु
क्ताफलस्पर्द्धिषु सीकरेषु पयोधरोत्सर्पिषु शीर्यमाणः संलक्ष्यते न छिदुरोपि हारः ६२ आवर्त्तशो
भानतनाभिकांते र्भंगो भ्रुवां द्वंद्वचराः स्तनानाम् जातानि रूपावयवोपमानान्यदूरवर्त्तीनि वि
लासिनीनाम् ६३ तीरस्थलीबर्हिभिरुत्कलापैः प्रस्निग्धकेकैरभिनंद्यमानम् श्रोत्रेषु संमू
र्छति रक्तमासां गीतानुगं वारिमृदंगवाद्यम् ६४ संदष्टवस्त्रेष्वबलानितंबेष्विंदुप्रकाशांतरि
तोडुकल्पाः अमी जलापूरितसूत्रमार्गा मौनं भजंते रसनाकलापाः ६५ एताः करोत्पीडि
तवारिधारा दर्पात्सखीभिर्वदनेषु सिक्ताः वक्रेतराग्रैरलकैस्तरुण्यश्चूर्णारुणान्वारि
लवान्वमंति ६६ उद्बद्धकेशश्च्युतपत्रलेखो विश्लेषिमुक्ताफलपत्रवेष्टः मनोज्ञ एव प्रम
दामुखानामंभोविहाराकुलितोपि वेषः ६७ स नौविमानादवतीर्य रेमे विलोलहारः
सह ताभिरप्सु स्कंधावलग्नोद्धृतपद्मिनीकः करेणुभिर्वन्य इव द्विपेंद्रः ६८ ततो नृपेणानु
गताः स्त्रियस्ता भ्राजिष्णुना सातिशयं विरेजुः प्रागेव मुक्ता नयनाभिरामाः प्राप्येंद्रनीलं
किमुतोन्मयूखम् ६९ वर्णोदकैः कांचनशृंगसंस्थैस्तमायताक्ष्यः प्रणयादसिंचन् तथो ६२
गतः सोतितरां बभासे सधातुनिस्यंद इवाद्रिराजः ७० तेनावरोधप्रमदासखेन विगाह
मानेन सरिद्वरां ताम् आकाशगंगारतिरप्सरोभिर्वृतो मरुत्वाननुयातलीलः ७१ यत्कुंभयो

नेरधिगम्य रामः कुशाय राज्ञे समदिदेश तदस्य जैत्राभरणं विहर्तुरज्ञातपातं सलिले ममज्ज
७२ स्नात्वा यथाकाममसौ सदारस्तीरोपकार्यां गतमात्र एव दिव्येन शून्यं वलयेन बाहुमपो
ढनेपथ्यविधिर्ददर्श ७३ जयश्रियः संवननं यतस्तदामुक्तपूर्वं गुरुणा च यस्मात् सेहेऽस्य न
भ्रंशमतो न लोभात् स तुल्यपुष्पाभरणो हि धीरः ७४ ततः समाज्ञापयदाशु सर्वानानायि
नस्तद्विचये नदीष्णान् वंध्यश्रमास्ते सरयूं विगाह्य तमूचुरम्लानमुखप्रसादाः ७५ कृतः
प्रयत्नो न च देव लब्धं मग्नं पयस्याभरणोत्तमं ते नागेन लौल्यात्कुमुदेन नूनमुपात्तमंतर्ह्र
दवासिना तत् ७६ ततः स कृत्वा धनुराततज्यं धनुर्धरः कोपविलोहिताक्षः गारुत्म
तं तीरगतस्तरस्वी भुजंगनाशाय समाददेऽस्त्रम् ७७ तस्मिन्ह्रदः संहितमात्र एव क्षो
भात्समाविद्धतरंगहस्तः रोधांसि निघ्नन्नवपातमग्नः करीव वन्यः परुषं ररास ७८ तस्मा
त्समुद्रादिव मथ्यमानादुद्वृत्तनक्रात्सहसोन्ममज्ज लक्ष्म्येव सार्धं सुरराजवृक्षः कन्यां पु
रस्कृत्य भुजंगराजः ७९ विभूषणप्रत्युपहारहस्तमुपस्थितं वीक्ष्य विशांपतिस्तम् सौ
पर्णमस्त्रं प्रतिसंजहार प्रह्वेष्वनिर्बंधरुषो हि संतः ८० त्रैलोक्यनाथप्रभवं प्रभावात्कुशं द्विषा
मंकुशमस्त्रविद्वान् मानोन्नतेनाप्यभिवंद्य मूर्ध्ना मूर्धाभिषिक्तं कुमुदो बभाषे ८१ अवैमि
कार्यांतरमानुषस्य विष्णोः सुताख्यामपरां तनुं त्वां सोऽहं कथं नाम तवाचरेयमाराधनीयस्य

इति विघातम् ८२ करालिघातोच्छितकंडकेयमालोक्य बालातिकुतूहलेन अत्यातिकं
ज्योतिरिवांतरिक्षादादत्त जैत्राभरणं त्वदीयं ८३ तदेतदाजानुविलंबिना ते ज्याघातरेख
किणलांछनेन भुजेन रक्षापरिघेन भूमेरुपैतु योगं पुनरंसलेन ८४ इमां स्वसारं च यवीयसीं मे कुमु
द्वतीं नार्हसि नानुमंतुं आत्मापराधं नुदतीं चिराय शुश्रूषया पार्थिव पादयोस्ते ८५ इत्यूचिवा
नुपहृताभरणं क्षितीशं श्लाघ्यो भवान् स्वजन इत्यनुभाषितारं संयोजयां विधिवदास स
मेतबंधुः कन्यामयेन कुमुदः कुलभूषणेन ८६ तस्याः स्पृष्टे मनुजपतिना साहचर्याय हस्ते मां
गल्योर्णावलयिनि पुरः पावकस्योच्छिखस्य दिव्यस्तूर्यध्वनिरुदचरद्व्यश्नुवानो दिगंता
न् गंधोदग्रं तदनु ववृषुः पुष्पमाश्चर्यमेघाः ८७ इत्थं नागस्त्रिभुवनगुरोरौरसं मैथिलेयं ल
ब्ध्वा बंधुं तमपि च कुशः पंचमं तक्षकस्य एकः शंकां पितृवधरिपोरत्यजद्वैनतेयाच्छांतव्याला
मवनिमपरः पौरकांतः शशास ८८ इति श्री रघुवंशे महाकाव्ये कालिदासकृतौ कुशप
रिणये कुमुद्वतीलाभो नाम षोडशः सर्गः समाप्तः ॥ ॥ अतिथिं नाम काकुत्स्थात्पु
त्रमाप कुमुद्वती पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना १ स पितुः पितृमान्वंशं मातुश्चानु
पमद्युतिः अपुनात्सवितेवोभौ मार्गावुत्तरदक्षिणौ २ तमादौ कुलविद्यानामर्थमर्थविदां वरः
पश्चात्पार्थिवकन्यानां पाणिमग्राहयत्पिता ३ जात्यस्तेनाभिजातेन शूरः शौर्यवतां कुशः अमन्य

तैकमात्मानमनेकंवशिनावशी ४ सकुलोचितमिंद्रस्यसाहायिकमुपेयिवान् जघानसमरेदैत्यंदुर्ज
यंतेनसोवधि ५ तंस्वसानागराजस्यकुमुदस्यकुमुद्वतीअन्वगात्कुमुदानंदं शशांकमिवकौमुदी
६ तयोर्दिवस्पतेरासीदेकः सिंहासनार्द्धभाक् द्वितीयापिसखीशच्याः पारिजातांशभागि
नी ७ तदात्मसंभवंराज्येमंत्रिवृद्धाः समादधुः स्मरंतः पश्चिमामाज्ञांभर्तुःसंग्रामयायिनः ८।
तेतस्यकल्पयामासुरभिषेकायशिल्पिभिः मंडपंनवमुद्वेदि चतुःस्तंभप्रतिष्ठितं ९ तत्रैनंहेमकुं
भेषु संभृतैस्तीर्थवारिभिः उपतस्थुः प्रकृतयोभद्रपीठोपवेशितं १० नदद्भिः स्निग्धगंभीरंतू
र्यैराहतपुष्करैः अन्वमीयतकल्याणंतस्याविच्छिन्नसंतति ११ दूर्वायवांकुरप्लक्षत्वगभिन्नपुटो
त्तरान् ज्ञातिवृद्धप्रयुक्तान्सभेजेनीराजनाविधीन् १२ पुरोहितपुरोगास्तंजिष्णुंजैत्रैरथर्व
भिः उपचक्रमिरेपूर्वमभिषेक्तुंद्विजातयः १३ तस्यौघमहतीमूर्ध्नि निःपतंतीव्यराजत सश
ब्दमभिषेकश्रीर्गंगेवत्रिपुरद्विषः १४ स्तूयमानः क्षणेतस्मिन्नलक्ष्यतसबंदिभिः प्रवृद्धइव
पर्जन्यः सारंगैरभिनंदितः १५ तस्यसन्मंत्रपूताभिः स्नानमद्भिः प्रतीच्छतः ववृधेवैद्युतस्याग्नेः
र्वृष्टिसेकादिवद्युतिः १६ सतावदभिषेकांतेस्नातकेभ्योददौवसु यावत्तेषांसमाप्येरन्यज्ञाः
पर्याप्तदक्षिणाः १७ तेप्रीतमनसस्तस्मैयामाशिषमुदैरयन् सातस्यकर्मनिर्वृत्तैः दूरंपश्चात्
कृताःफलैः १८ बंधच्छेदंसबद्धानांवधार्हाणामवध्यतांधुर्याणांचधुरोमोक्षमदोहंचादिशद्गवां

१९ श्रीतापत्रिणापस्य यंज्ञरस्याः शुक्राद्यः लक्ष्मीप्रासादेशाद्यथेदगतयोऽभवन् २० ततः
कल्पान्तरे न्यस्तं गजदंतासनं शुवि सौगूरध्वद्मप्रास्तने पद्मयुग्दणाय सः २१ तं भूपारणान्तकेश
ते तोयनिर्णिक्तिप्रणव आकल्पसाधने स्वेस्वे रूपसेकः प्रसाधकाः २२ तस्य मुक्तागुणान
द्धे मौलिमसंतरसवर्द्धपदतुङ्गः पद्मरागेण प्रसाम्य नक्षत्राणि जिना २३ चंदन नागराजेन च स्वगनाभिसु
गंधिना समापद्यत तस्य श्रुतः पत्रविन्यस्तरोचनं २४ आमुक्ताभरणः स्रग्वी हंसचिह्नदुकूलवा
न् आसीदतिशयश्रेयः सराज्यश्रीवधूवरः २५ नेपथ्यदर्शिनश्छाया तस्यादर्शे हिरण्मये
विरराज नवे सूर्ये मेरौ कल्पतरोरिव २६ सराजककुदव्यग्रपाणिभिः पार्श्ववर्तिभिः ययावुद
रितालोकः सुधर्मानवमां सभां २७ वितानसहितं तत्र भेजे पैतृकमासनं चूडामणिभिरुद्घृष्ट
पादपीठं महीक्षितां २८ बभौ भूयः कुमारत्वादधिराज्यमवाप्य सः लेखाभावादुपारूढः
सामग्र्यमिव चंद्रमाः २९ शुशुभे तेन चाक्रान्तं मंगलायतनं महत् श्रीवत्सलक्षणं वक्षः ।
कौस्तुभेनेव केशवं ३० प्रसन्नमुखरागं तं स्मितपूर्वाभिभाषिणं मूर्तिमंतममन्यंत विश्वा
समनुजीविनः ३१ स पुरं पुरुहूतश्रीः कल्पद्रुमनिभध्वजां क्रममाणश्चकार द्यां नागेनैरा
वतौजसा ३२ तस्यैकस्योच्छ्रितं छत्रं मूर्ध्नि तेनामलत्विषा पूर्वराजवियोगोष्ण्यं कृत्स्न ६५
स्य जगतो हृतं ३३ धूमादग्नेः शिखा पश्चादुदयादंशवो रवेः सोतीत्य तेजसां वृ

शिं सममेवोत्थितो गुणैः ३४ नयीतिविशादैर्नैत्रि रन्वयुः पौरस्योचितः सरेशुसन्नेकयातिर्विसावर्यइवोद्धुं
३५ अयोध्यादेवतास्चैनं प्रशस्तायतनार्चिताः अनुदध्युरनुध्येयं सांनिध्यैः प्रतिमागतैः ३६ यावन्ना
श्यायते वेदिरभिषेकजलप्लुता तावदेवास्य वेलान्तं प्रतापः प्राप दुःसहः ३७ सधर्मस्थसखः शश्वद
र्थिप्रत्यर्थिनां स्वयं ददर्श संशयच्छेद्यान्व्यवहारानतन्द्रितः ३८ ततः परमभिव्यक्तसौमनस्यनिवेदि
तैः युयोज पाकाभिमुखैर्भृत्यान्विज्ञापनाफलैः ३९ वसिष्ठस्य गुरोर्मंत्राः सायकास्तस्य धन्विन
किं तत्साध्यं यदुभये साधयेयुर्न संगताः ४० प्रजास्तद्गुरुणा नद्यो नभसेव विवर्धिताः तस्मिंस्तु
कृत्यसंरुद्धिं नतस्पेताद्वायस्तु: ४१ यदुवाच न तन्मिथ्या यद्ददौ न जहार तत् सोऽभूद्भग्नव्रतः शत्रू
नुद्धृत्य प्रतिरोपयन् ४२ वयोरूपविभूतीनामेकैकं मदकारणं तानि तस्मिन्समस्तानि न चास्योत्सिषिचे म
नः ४३ इत्थं जनितरागासु प्रकृतिष्वनुवासरं अक्षोभ्यः स नवोऽप्यासीद्दृढ पूर्वमजयद्रिपून् ४५ प्र
सादसुमुखे तस्मिंश्चपलापि स्वभावतः निकषे हेमरेखेव श्रीरासीदनपायनी ४६ कातर्यं केवला नीतिः
शौर्यं श्वापदचेष्टितं अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः ४७ न तस्य मंडले राज्ञो न्यस्तप्रणिधिदीधि
तेः अदृष्टमभवत्किंचिद्व्यभ्रस्येव विवस्वतः ४८ रात्रिंदिवविभागेषु यदादिष्टं महीक्षितां तत्
सिषेवे नियोगेन स विकल्पपराङ्मुखः ४९ मंत्रः प्रतिदिनं तस्य बभूव सह मंत्रिभिः स जातु
सेव्यमानोऽपि गुप्तद्वारो न सूच्यते ५० परेषु स्वेषु विक्षिप्तैरविज्ञातपरस्परैः सोपसर्पैर्ज

जागर यथाकालं स्वपन्नपि ५१ तद्वसुरम्याः समारंभाः प्रत्यवेक्ष्या निरत्ययाः गर्भशालि
सधर्माणः स्तस्य रुद्धं विपेचिरे ५२ अपथेन प्रवर्तेत न जातु पचितोपि सः दृष्टो नदीसुखे
नैव प्रस्थानं हि सरत्पतेः ५३ मित्रासंवर्द्धितो नित्यं कृतास्त्रः सांपरायिकः तस्य दंडव
तो दंडः स्वदेहान्न व्यशिष्यत ५४ दुर्गाणि दुर्ग्रहाणि स्तस्य रोद्धुरपि द्विषां न हि सिंहो
गजास्कंदी भयाद्गिरिगुहाशयः ५५ कामं प्रकृतिवैराग्यं सद्यः शमयितुं क्षमः यस्य
कार्यप्रतीकारः स तन्नैवोपपादयत् ५६ शक्येष्वेवाभवद्यात्रा तस्य शक्तिमतः सतः
समीरणसहायोपि नांभः प्रार्थी दवानलः ५७ न धर्ममर्थकामाभ्यां बबाधे न च तेन तौ नार्थं
कामेन कामं वा सोर्थेन सदृशस्त्रिषु ५८ हीनान्यनुपकर्तॄणि प्रवृद्धानि विकुर्वते तेन मध्य
मशक्तीनि मित्राणि स्थापितान्यतः ५९ परात्मनोः परिच्छिद्य शक्त्यादीनां बलाबले ययाव
भिर्बलिष्ठश्चेत्परस्मादास्त सोन्यथा ६० कोशेनाश्रयणीयत्वमिति तस्यार्थसंग्रहः अंबु
गर्भो हि जीमूतश्चातकैरभिनंद्यते ६१ परकर्मापहः सोभूदुद्यतः स्वेषु कर्मसु आवृणो
दात्मनो रंध्रं रंध्रेषु प्राहरद्द्विषः ६२ सर्पस्येव शिरोरत्नं नास्य शक्तित्रयं परः स चकर्ष पर
स्मात्तदयस्कांत इवायसं ६३ वापीष्विव स्रवंतीषु वनेषूपवनेष्विव सार्थाः स्वैरं स्वकीयेषु चे ६६
रुर्वेश्मस्विवाद्रिषु ६४ तपोरक्षन्स विघ्नेभ्यः स्तस्करेभ्यश्च संपदः यथास्वमाश्रमैश्चक्रे वर्णैरपि षडंशभाक् ६५ ख

निशिः सुप्तवेश्मन्तंश्चैः स सप्तवने गजान् दिदेशचैतं नेतस्मै रक्षासहस्रमेव च ॥ ६६ सगुणानां बलानां च
षट्प्रकारेषु खवि क्रमः बभूव विनियोगज्ञः साधनीयेषु वस्तुषु ६७ इतिक्रमात्स्वयं ज्ञानो दंडनीतिं चतु
र्विधां आन्वीक्षिकीं त्रयीं वार्तां स तस्याः फलमानशे ६८ कूटयुद्धविधिज्ञोपि तस्मिन्सन्मार्गयोधिनि ॥
तेजोभिसारिकां रेजे जयश्रीर्वीरकामिनी ६९ प्रायः प्रतापभग्नत्वादरीणां तस्य दुर्लभः रणो
गंधद्विपस्येव गंधभग्नान्यदंतिनः ७० प्रवृद्धौ हीयते चंद्रः समुद्रोपि तथाविधः स तु तत्सम[illegible]
द्धिः न चाभूत्ताविव क्षयी ७१ संतस्तस्माभिगमनाद[illegible]र्थमहतः कृशाः उदधेरिव जीमूताः प्रापु
र्दातृत्वमर्थिनः ७२ स्तूयमानः स जिह्राय स्तुत्यमेव समाचरन् तथापि ववृधे तस्य तत्कारिद्वेषिणो
यशः ७३ दुरितं दर्शनेन घ्नंस्तत्त्वार्थेन नुदंस्तमः विरज्यत्कं वसंश्चक्रे शास्त्रतस्यार्कवोदितः ७४ इं
दोरगत्यः पद्मे सूर्यस्य कुमुदेंशवः गुणास्तस्य विपक्षेपि गुणिनो लेभिरे तरं ७५ पराभिसंधानप
रं यद्यप्यस्य विचेष्टितं जिगीषोरश्वमेधाय धर्म्यमेव बभूव तत् ७६ एवमुद्यत्प्रभावेण शास्त्रनिर्दिष्ट
वर्त्मना वृषेव देवो देवानां राजा राज्ञां बभूव सः ७७ पंचमं लोकपालानामूचुः साधर्म्ययोगतः ।
भूतानां महतां षष्ठमष्टमं कुलभूभृतां ७८ दूरापवर्जितच्छत्रैस्तस्याज्ञां शासनार्पितां दधुः शिरोभिर्भू
पाला देवाः पौरंदरीमिव ७९ ऋत्विजः स तथानर्च दक्षिणाभिर्महाक्रतौ यथा साधारणीभूतं ना
मास्य धनदस्य च ८० इंद्राद्वृष्टिर्नियमितगदोद्रेकवृत्तिर्यमो[illegible]यादोनाथः शिवजलपथः कर्म

णेनौचराणं पूर्वपिकी तदनु विदधे: कौशार्दिकं वेरं तस्मिन्दंतेपतनचरेते सेडिरेलोकपालाः ८१ इति
श्रीरघुवंशे महाकाव्ये कालिदासकृतौ अतिथिवर्णनोनाम सप्तदश सर्गः ॥१७॥ सनैषधस्यार्थपतेःसु
तायामुत्पादयामास निषिद्धशत्रुः अनूनसारं निषधान्नगेंद्रात्पुत्रंयमाहुर्निषधाख्यमेव १ तेनोरुवा
र्येण पिता प्रजायै कल्पिष्यमाणेन ननंद यूना सुवृष्टियोगादिव जीवलोकः सस्येन संपत्तिफलात्म
केन २ शब्दादिनिर्विश्यसुखंचिराय तस्मिन्प्रतिष्ठापितराजशब्दः कौमुद्वतेयः कुमुदावदातैर्द्यामर्जि
तांकर्मभिरारुरोह ३ पौत्रः कुशस्यापि कुशेशयाक्षः ससागरां सागरधीरचेताः एकातपत्रां भुवमेक
वीरः पुरार्गलादीर्घभुजोबुभोज ४ तस्यानलौजास्तनयस्तदंते वंशश्रियंप्राप नलाभिधानः योन
ड्वलानीव गजः परेषां बलान्यमृद्नान्नलिनाभवक्त्रः ५ नभश्चरैर्गीतयशाः सलेभे नभस्तलश्याम
तनुंतनूजं ख्यातंनभःशब्दमयेन नाम्ना कांतं नभोमासमिवप्रजानां ६ तस्मैविसृज्योत्तरकोश
लानां धर्मोत्तरस्तत्प्रभवेप्रभुत्वं मृगैरजर्यंजरसोपदिष्टमदेहबंधाय पुनर्बबंध ७ तेनद्विपा
नामिवपुंडरीको राज्ञामजय्योजनिपुंडरीकः शांते पितर्याहृतपुंडरीकायंपुंडरीकाक्षमिवश्रिता
श्रीः ८ सक्षेमधन्वानममोघधन्वा पुत्रंप्रजाक्षेमविधानदक्षं क्ष्मांलंभयित्वा क्षमयोपप
न्नं वनेतपःक्षांततरश्चकार ९ अनीकिनीनांसमरेग्रयायी तस्यापिदेवप्रतिमःसुतोभूत् व्यश्रूय ६१
तानीकपदावसानो देवादिनाम त्रिदिवेपियस्य १० पितासमाराधनतत्परेण पुत्रेणपुत्रीसयथैवतेन

पुत्रस्तथैवाधिकवत्सलेन स तेन पित्रा पितृमान्बभूव ११ पुत्रस्तयोरात्मसमे चिरोढामात्मोद्भवे
वर्णचतुष्टयस्य धुरं निधिर्गुणानां जगाम यज्वा यजमानलोकं १२ वशी सुतस्तस्य वशंवदत्वात्स्वेषा
मिवासीद्द्विषतामपीष्टः सकृद्विविग्नानपि हि प्रयुक्तं माधुर्यमीष्टे हरिणान्ग्रहीतुं १३ अहीन
गुर्नाम स गां समग्रामहीनबाहुर्द्रविणः शशास यो हीनसंसर्गपराङ्मुखत्वाद्युवाप्यनर्थैर्व्यस
नैर्विहीनः १४ युग्मं गुरोः स चानन्तरमन्तरज्ञः पुंसां पुमानाद्य इवावतीर्णः उपक्रमैरस्खलितैश्च
तुर्भिश्चतुर्दिगीशश्चतुरो बभूव १५ तस्मिन्प्रयाते परलोकयात्रां जेतर्यरीणां तनयं तदीयं
उच्चैःशिरस्त्वाज्जितपारियात्रं लक्ष्मीः सिषेवे किल पारियात्रं १६ तस्माद्दनूनावधदत्तनामो
दमान्वितः पक्षदलाभदृष्टिः कुंदाभदंतो रिपुदंतिसिंहः पतिर्द्विषत्याः कुलकैरवेंदुः १७ त
स्याभवत्सूनुरुदारशीलः शिलः शिलापट्टविशालवक्षाः जितारिपक्षोऽपि शिलीमुखैर्यः शाली
नतामव्रजदीड्यमानः १८ तमात्मसंपन्नमनिंदितात्मा कृत्वा युवानं युवराजमेव सुखानि सोऽभु
ङ्क्त सुखोपरोधि वृत्तं हि राज्ञामुपरुद्धवृत्तं १९ तं रागबंधिष्ववितृप्तमेव भोगेषु सौभाग्यवि
शेषभोग्यं विलासिनीनामरतिक्षमापि जरा वृथा मत्सरिणी जहार २० दिव्यान्यथो गांस्तपसो
पमेन त्रिविष्टपस्थापवितृक्षितीशो तदात्मजः स्यागरथोश्वेताः शशास सद्द्वीपकवान्दृशोम्भः
२१ उन्नाभ इत्युद्गतनामधेयस्तस्यायथार्थोन्नतनाभिरंध्रः आसीत्सुतः पंकजनाभकल्पः।

ऽत्मनीनः ३४ ततः प्रतस्थे स नवं जयेद्र क्रतोरुपमेयो ध्रुवसंधिवर्त्म यस्मिन्नलङ्घ्या यसिसस्य संख्ये संधि
र्ध्रुवः सन्नमतां रिपूणां ३५ वंशस्थितं वंशकरेण तेन संभाव्य तावीस सखा मघोनः उपस्थितानस्सर्वनिर्वृ
त्तिलोलस्त्रिशूलहस्ते शुचिशुचां तिमाय ३६ सुते शिशावेव सुदर्शनाख्ये दर्शात्ययेन्दुप्रियदर्शने सः
मृगायताक्षो मृगयाविहारी सिंहादवापद्विपदं नृसिंहः ३७ स्वर्गाभिसन्धिसुकृतं तमेक मस्याददमात्य
वर्गः कृतं तमेकं सनाथहीनाः प्रकृतीरवेक्ष्य साकेतनाथो विधिवच्चकार ३८ नवेन्दुनाता नि
तसोपमेयं शावेकसिंहो नरकाननेन रघोः कुलं कुड्मलपुष्करेण तोयेन चाप्रौढनरेन्द्रमासीत् ३९॥
लोके न साम्यावपि चरे व ऽत्यः स लावितो मौलिपरिग्रहात्सः दृष्टो हि वृष्णन्कलभप्रमाणोप्याशाः पुरोवा
तमवाप्य मेघः ४० तं राजवीथ्यामधिहस्ति यंतमाधोरणालंबितमग्र्यवेषं षड्वर्षदेशीयमपि प्रभु
त्वात्प्रैक्षंत पौराः पितृगौरवेण ४१ कामं न सोऽकल्पत पैतृकस्य सिंहासनस्य प्रतिपूरणाय तेजोमहिम्ना
पुनरावृतात्मा तद्व्याप चामीकरपिंजरेण ४२ तस्मादधः किंचिदिवावतीर्णावसंस्पृशंतौ तपनीयपीठं
सालक्तकौ भूपतयः प्रसिद्धैर्ववंदिरे मौलिभिरस्य पादौ ४३ मणौ महानील इति प्रभावादल्पप्रमाणेऽपि
यथा न मिथ्या शब्दो महाराज इति प्रतीतस्तथैव तस्मिन्युयुजेऽर्भकेऽपि ४४ पर्यंतसंचारितचामरस्य
कपोललोलोभयकाकपक्षात् तस्याननादुच्चरितो विवादश्चस्खाल वेलास्वपि नार्णवानां ४५ निर्वृ
त्तजांबूनदपट्टशोभे न्यस्तं ललाटे तिलकं दधानः तेनैव शून्यान्यरिसुन्दरीणां मुखानि स स्मेरमुखश्चकार ४६

रघुकाव्य सटम॥ ६८

शिरीषपुष्पाधिकसौकुमार्यः खेदं स यायादपि भूषणेन नितांतगुर्वीमपि सोनुभावाद्धुरं धरित्र्या बिभरांबभूव ४७
न्यस्ताक्षरामक्षरभूमिकायां कार्त्स्न्येन गृह्णाति लिपिं न यावत् तावत्फलानि श्रुतवृद्धयोगात्फलान्युपायुं
क्त स दंडनीतेः ४८ उरस्यपर्याप्तनिवेशभागा प्रौढीभविष्यन्तमुदीक्षमाणा संजातलज्जेव तमातप
त्रच्छायाच्छलेनोपजुगूह लक्ष्मीः ४९ अनश्नुवानेन युगोपमानमबद्धमौर्वीकिणलांछनेन अस्पृष्टख
ड्गत्सरुणापि चासीद्रक्षावती तस्य भुजेन भूमिः ५० न केवलं गच्छति तस्य काले ययुः शरीरावयवा
विवृद्धिं वंश्या गुणाः खल्वपि लोककांताः प्रारंभसूक्ष्माः प्रथिमानमीयुः ५१ स पूर्वजन्मांतरदृष्टपा
राः स्मरन्निवाक्लेशकरो गुरूणां तिस्रस्त्रिवर्गाधिगमस्य मूलं जग्राह विद्याः प्रकृतीश्च पित्र्याः ५२
व्यूह्य स्थितः किंचिदिवोत्तरार्धमुन्नद्धचूडोंचितसव्यजानुः आकर्णमाकृष्टसबाणधन्वा व्यरोचता
स्त्रेषु विनीयमानः ५३ अथ मधु वनितानां नेत्रनिर्वेशनीयं मनसिजतरुपुष्पं रागबंधप्रवालं अकृतक
विधि सर्वांगीणमाकल्पजातं विलसितपदमाद्यं यौवनं स प्रपेदे ५४ प्रकृतिरचनाभ्यो दूतिसंदर्शिताभ्यः
समधिकतररूपाः शुद्धसंतानकामैः अधिविविदुरमात्यैराहृतास्तस्य यूनः प्रथमपरिगृहीते श्रीभुवौ
राजकन्याः इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ अन्वयवर्णनो नाम अष्टादशः सर्गः १८॥
अग्निवर्णमभिषिच्य राघवः स्वे पदे तनयमग्नितेजसं शिश्रिये श्रुतवतामपश्चिमः पश्चिमे वयसि नैमि ६८
षं वशी १ तत्र तीर्थसलिलेन दीर्घिकास्तल्पमंतरितभूमिभिः कुशैः सौधवासमुटजेन विस्मरन्सव

कायफलनिःस्पृहस्य: २ लब्धपालनविधौ न तत्सुतः खेदमापगुरुणा हि मेदिनी भोक्तुमेव भुजनिर्जितद्वि
षा नः प्रसाधयितुमस्य कल्पिता ३ सोधिकारमभिपः कुलोचितं काश्चन स्वयमवर्त्तयत्समाः तंनिवेश्य स
चिवेष्वतः परं स्त्रीविधेयनवयौवनोभवत् ४ कामिनीसहचरस्य कामिनस्तस्य वेश्मसु मृदंगनादिषु ऋद्धिमंतमधि
कर्द्धिरुत्तरः पूर्वमुत्सवमपोहदुत्सवः ५ इंद्रियार्थपरिशून्यमक्षमः सोढुमेकमपि सक्षणांतरं अंतरेव विहरन्
दिवानिशं न व्यपेक्षत समुत्सुकाः प्रजाः ६ गौरवाद्यदपि जातु मंत्रिणां दर्शनं प्रकृतिकांक्षितं ददौ तद्गवाक्षवि
वरावलंबिना केवलेन चरणेन कल्पितं ७ तं कृतप्रणतयोनुजीविनः कोमलात्मनखरागरूषितं भेजिरे नव
दिवाकरातपस्पृष्टपंकजतुलाधिरोहितं ८ यौवनोन्नतविलासिनीस्तनक्षोभलोलकमलाश्च दीर्घिकाः
गूढमोहनगृहास्तदंबुभिः स व्यगाहत विगूढमन्मथः ९ तत्र सेकहृतलोचनांजनैर्धौतरागपरिपाटला
धरैः अंगनास्तमधिकं व्यलोभयन्नर्पितप्रकृतिकांतिभिर्मुखैः १० घ्राणकांतमधुगंधकर्षिणीः पानभूमि
रचनाः प्रियासखः अभ्यपद्यत स वासितासखः पुष्पिताः कमलिनीरिव द्विपः ११ सातिरेकमदकारणं
रहः तेन दत्तमभिलेषुरंगनाः ताभिरप्युपहृतं मुखासवं सोपिबद्बकुलतुल्यदोहदः १२ अंकमंकप
रिवर्त्तनोचिते तस्य निन्यतुरशून्यतामुभे वल्लकी च हृदयंगमस्वना वल्गुवागपि च वामलोचना १३ स स्वयं
प्रहतपुष्करः कृती लोलमाल्यवलयो हरन्मनः नर्तकीरभिनयातिलंघिनीः पार्श्ववर्त्तिषु गुरुष्वलज्जय
त् १४ चारुनृत्यविगमे च तन्मुखं स्वेदभिन्नतिलकं परिश्रमात् प्रेमदत्तवदनानिलः पिबन्नत्यजीवदमरालके

श्वरो १५ तस्य सावरणदृष्टसंधयः काम्यवस्तुषु नवेषु संगिनः वल्लभाभिरुपसृत्य चक्रिरे सामिभुक्तविषया
:समागमाः १६ अंगुलीकिसलयाग्रतर्जनं भ्रूविभंगकुटिलं च वीक्षितं मेखलाभिरसकृच्च बंधनं वंचय
न्प्रणयिनीरवाप सः १७ तेन दूतिविदितं निषेदुषा पृष्ठतः सुरतवारवात्रिषु शुश्रुवे प्रियजनस्य कात
रं विप्रलंभपरिशंकिनो वचः १८ लौल्यमेत्य गृहिणीपरिग्रहात् नर्त्तकीष्वसुलभासु तद्वपुः वर्त्तते स्म स क
थंचिदालिखन्नंगुलीक्षरणसन्नवर्त्तिकः १९ प्रेमगर्वितविपक्षमत्सरादायताच्च मदनान्महीक्षितं।
निन्युरुत्सवविधिच्छलेन तं देव्य उज्झितरुषः कृतार्थतां २० प्रातरेत्य परिभोगशोभिना दर्शनेन कृतखंडनव्यथा
:प्रांजलिः प्रणयिनीः प्रसादयन् सोऽदुनोत्प्रणयमंथरः पुनः २१ स्वप्नकीर्त्तितविपक्षमंगनाः प्रत्यभैत्सु
रवदंत्य एव तं प्रच्छदांतगलिताश्रुबिंदुभिः क्रोधभिन्नवलयैर्विवर्त्तनैः २२ क्लृप्तपुष्पशयनांल्लतागृहा
नेत्य दूतिकृतमार्गदर्शनः अन्वभूत्परिजनांगनारतं सोऽवरोधभयवेपथूत्तरं २३ नाम वल्लभजनस्य ते
मया प्राप्य भाग्यमपि तस्य कांक्ष्यते लोलुपं बत मनो ममेति तं गोत्रविस्खलितमूचुरंगनाः २४ चूर्णबभ्रु लुलि
तस्रगाकुलं छिन्नमेखलमलक्तकांकितं उत्थितस्य शयनं विलासिनस्तस्य विभ्रमरतान्यपावृणोत् २५ स
स्वयं चरणरागमादधे योषितां न च तथा समाहितः लोभ्यमाननयनः श्लथांशुकैर्मेखलागुणपदैर्नितं।
बिभिः २६ चुंबने विपरिवर्त्तिताधरं हस्तरोधि रसनाविघट्टने विघ्नितेच्छमपि तस्य सर्वतो मन्मथेंधनमभू ४०
द्वधूरतं २७ दर्पणेषु परिभोगदर्शिनीर्नर्मपूर्वमनुपृष्ठसंस्थितः छायया स्मितमनोज्ञया वधूर्ह्रीनिमीलित।

ह्नाश्च कारसः २८ कंचशाक्कमृडबाक्कबंधनं मारुतपावृत्तलमवपात्ययोः प्रार्थयंतिशायनोच्छिताः प्रियासं
निशात्मयविशेषबुबुंवतं २९ प्रेक्ष्यदर्पणतलस्थमात्मनो राजवेषमतिशाक्रशोभितं प्रियेसनतच्छा।
गुवायथा मक्किलक्ष्मपरितोगमंकनं ३० मित्रकृत्यमपदिश्य पार्श्वतः प्रस्थितं तमनवस्थितं प्रियाः वि
स्मृते शावपलायनच्छला मंजसेति रुरुधुः कचग्रहे ३१ तस्य निर्दयरतिश्रमालसा कंचवस्त्रमपदिश्यपयो बि
तः अभ्यरोरतमूर्छद्भुजांतरं पीवरस्तनविलुप्तकुंकुमं ३२ संगमाय निशि गूढचारिणं चारुदूतिकथितं पुरो
गताः वंचयिष्यसि कुतस्तमोवृताः कामुकेति च कृषुस्तमंगनाः ३३ योषितामुडुपतेरिवार्चिषां स्पर्शनि
र्वृतिमसावनाप्नुवन् आरुरोह कुमुदाकरोपमां रात्रिजागरपरो दिवाशयः ३४ वेदनादशनपीडिताध
रा वीणया नखपदांकितोरवः शिल्पकार्य उभयेन वेजिताः संविजिह्ममनया व्यलोकयन् ३५ अंगस
त्वकवसाम्प्रायेमिथ्याः स्त्रीषु नृत्तमुपधाय दर्शयन् सप्रयोगनिपुणैः प्रयोक्तृभिः संजहर्ष सह मित्रसन्निधौ
३६ अंसलंबिकुटजार्जुनस्रजस्तस्य नीपरजसांगरागिणः प्रावृषि प्रमदबर्हिणेष्वभूत्कृत्रिमाद्रि
षु विहारविभ्रमः ३७ विग्रहाच्च शयनेष्वराङ्मुखीर्नानुनेतुमबलाः स तत्वरे आचकांक्ष घनशब्दविक्ल
वास्ता विवृत्य विशतीर्भुजांतरं ३८ कार्तिकीषु सवितानहर्म्यभाग्यामिनीषु ललितांगनासखः
अन्वभुंक्त सुरतश्रमापहं मेघमुक्तविशदां स चंद्रिकां ३९ सैकतं च सरयूं विवृण्वतीं श्रोणिबिंबमिव हंसमेख
लां स्वप्रियाविलसितानुकारिणीं सौधजालविवरैर्व्यलोकयत् ४० मर्मरैरगुरुधूपगंधिभिर्व्यक्तहेमरसनैस्त

गात् ५३ तं गृहोपवन एव संगताः पश्चिमक्रतुविदा पुरोधसा रोगशांतिमपदिश्य मंत्रिणः संभृते शिखि
नि गूढमादधुः ५४ तैः कृतप्रकृतिमुख्यसंग्रहैराशु तस्य सहधर्मचारिणी साधुदृष्टशुभगर्भलक्षणा प्र
त्यपद्यत नराधिपश्रियं ५५ तस्यास्तथाविधनरेंद्रविपत्तिशोकादुष्णैर्विलोचनजलैः प्रथमाभितप्तः
निर्वापितः कनककुंभमुखोज्झितेन वंशाभिषेकविधिना शिशिरेण गर्भः ५६ तं भावार्थं प्रसवसमया
कांक्षिणीनां प्रजानामंतर्गूढं क्षितिरिव नभो बीजमुष्टिं दधाना मौलैः सार्द्धं स्थविरसचिवैर्हेमसिंहा
सनस्थं राज्ञी राज्यं विधिवदशिषद्भर्तुरव्याहताज्ञाः ५७ इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ रा
ज्ञोग्निवर्णो नाम विंश एकोनविंशतितमः सर्गः ॥१९॥ इति श्रीरघुवंशस्त्रं समाप्तं। यमाप्तिगमात्॥

॥श्रीगुरुदेवेनमः॥ वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये जगतः पितरौ वंदे पार्वतीपरमेश्वरौ १ क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः तितीर्षुर्दुस्तरं मोहादुडुपेना
स्मि सागरं २ मंदः कवियशः प्रार्थी गमिष्याम्युपहास्यतां प्रांशुलभ्ये फले मोहादुद्बाहुरिव वामनः ३ अथवा कृतवाग्द्वारे वंशेऽस्मिन्पूर्वसूरिभिः मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ४ सोऽहमाजन्मशुद्धानामाफलोदयकर्मणां आसमुद्रक्षितीशा
नामानाकरथवर्त्मनां ५ यथाविधिहुताग्नीनां यथाकामार्चितार्थिनां यथापराधदंडा
नां यथाकालप्रबोधिनां ६ त्यागाय संभृतार्थानां सत्याय मितभाषिणां यशसे वि
जिगीषूणां प्रजायै गृहमेधिनां ७ शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणां वा
र्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजां ८ रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि
सन् तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः ९ स्खलितः कालक्रम वैवस्वतो म
नुर्नाम माननीयो मनीषिणां आसीन्महीक्षितामाद्यः प्रणवश्छंदसामिव १० तंसं
तः श्रोतुमर्हंति सदसद्व्यक्तिहेतवः हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा
११ तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः दिलीप इति राजेंदुरिंदुः क्षीरनिधाविव १२
व्यूढोरस्को वृषस्कंधः शालप्रांशुर्महाभुजः आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः